## शिवपुजायांम्विहित पूष्पाणि

ऋतुकालोद्भवैःपुष्पैर्मल्लिकाजातिकुंकुमैः सितरक्तै स्तथापुष्पैःश्वेतपद्मैश्चपाण्डुरैः धत्तूरकादियुक्तैश्चबन्धूकागस्त्यसम्भवैः मंदनैसिन्धुवारैश्चदुर्वांकुरसुकोमलैः मञ्जरीभिःकुशानांच बिल्वपत्रैस्सुकोमलैः। अन्यानिवनपुष्पाणि जलजस्थलजानिच गिरिजानिर्दशजानि शम्भवेच समर्पयेत्।

## शक्ति विषयेवर्जितपुष्पाणि तावल्लक्ष्मीपूजायांयथा

तुळसीश्वेतमन्दारै कल्हारैःश्वलमालकैः। नार्चयेन्महालक्ष्मीं कुशकाशोद्भवे न च

## त्रिपुरा विषये

पलाशाकोशकुसुमैर्नार्च्चयेद्दूरतस्त्यजेत्। धात्रीतमालजैःपत्रै स्तुलसीद्वितयन्तथा पूजनात्पातकीचास्य लक्ष्मैश्चापिप्रियंहरेत्। रक्तमाल्यश्वेतदुर्वानीलकण्ठकुरण्टकम् नदद्याच्चमहादेव्यै यदीच्छेच्छुभमात्मनः।

## शक्तिविषये विहितपुष्पाणि

विष्णुकान्तायथानागानागकेशरंनागवल्लभम् बन्धूकंचैवमन्दारं सवृन्तेनसमर्चयेत् पुष्पश्रेष्ठं कोकनदं वधूकं शतपत्रकं अर्धरात्रितयंचैव कर्णिकारद्वयन्तथा। वकुमन्दारचूतानिकरवीराणिशस्यते मल्लिकाद्वितयं जातीक्षौमपुष्पं जयान्तिकम् विल्वपत्रं कुरुवकं मुनिपुष्पं च केशरम् वासन्तीद्वितयंचैव काशपुष्पंमरुचकम्॥ मदनं च लवङ्गं च यूथीसेफालिका तथा सुगंधिश्वेतिसौरभ्यैः कुसुमैरर्चयेद्दलैः

## पुष्प विषये विशेषवचनम्

* शक्तौदुर्वार्कमन्दारा न्मोलूरं तगरंरवौ। विनायकेतुतुलसीं नार्चयेज्जातुचिद्‌बुधः

## पुष्पप्रतिनिधिः

अलाभेनतुपुष्पाणां पत्राण्यपिनिवेदयेत्। पत्राणामप्यलाभे तुफलान्यपिनिवेदयेत् फलानामप्यलाभेतु तृणगुल्मौषधीरपि। औषधीनामलाभेतु भक्त्याभवतिपूजितः

---

* देवीनामर्कमन्दार मादित्येतगरं तथा। गणेशाय च सूर्याय रक्तपुष्पमतिप्रियम्॥ नाक्षतैरर्चयेद्विष्णुं न तुलस्यागणाधिपं। नदुर्वयार्चयेद्दुर्गां विल्वपत्रैर्दिवाकरम्॥ मालूरंभूगतन्देयं तस्यकाष्ठस्यचन्दनम्। विल्वस्यमुकुलंवर्ज्यं कदल्यापत्रकंतथा।

## दूषित पुष्पाणि

मलिनंभूमिसंस्पृष्टं कृमिकेशादिदूषितम् । पर्य्युषितानिपुष्पाणिवर्जयेद्देवतार्चने

## छिन्नभिन्नपत्राणि

बिल्वस्यखदिरस्यैवतथाधात्रीदलस्यच तमालस्य च पत्रस्यछिन्न भिन्नेनदुष्यति ।

## विहितभूमिपतितपुष्पाणि

भूगतम्वर्जयेत्पुष्पंसेफालीम्बकुलम्बिना । तिष्ठेद्दिनत्रयंशुद्धं पद्ममामलकंतथा ।

## विहितपर्युंषितपुष्पाणि

(क) तुलसीसर्वदाशुद्धातथाविल्वदलानिच विल्वपत्रंचमामाघ्यंतमालामलकीदलम्

(ख) कल्हारंतुलसींचैवपद्मंचमुनिपुष्पकम् एततपर्युंषितंनस्याद्यच्चान्यत्कलिकात्मकम्

## धूपपदार्थाः

सिताज्यमधुसंमिश्रं गुग्गुलूगुरुचन्दनम् षडंगंधूपयेत्तत्तु सर्वदेवप्रियंसदा ।

## तेषांभागपरिकल्पनम्

सिताज्यंचसमंग्राह्यन्तदर्धंसर्वमेवहि । धूपपात्रंसरोजातंसुवर्णादिविनिर्म्मितम्

पादयोरपितस्यस्यादुत्सेधं चतुरंगुलम् अनेकसुषिरंतस्यपिधानंसदृशम्भवेत्

दीपम्

## दीपद्रव्यम्

दीपपात्रविधिंवक्ष्येपलद्रव्यादिरर्घ्यवत् । पठेननागलाद्यंहिधूपपात्रवदुच्यते

गोसर्पिंषावातैलेन वर्त्या च लघुगर्भया । दीपितंसुरभिंदग्धं दीपमुच्चैःप्रदीपयेत्

## नैवेद्यम्

यस्यदेवस्ययद्भोज्यं विहितं देयं पृथक् पृथक् ।

## अर्पितपदार्थेषुकःपदार्थःकदानिर्म्माल्यतांयाति

मणिमुक्तासुवर्णानिदेवदत्तानियानिवै । तन्निर्माल्यंद्वादशाब्दं ताम्रपात्रं तथैवच ।।

पटीशाटीचषण्मासे नैवेद्यंदत्तमात्रतः । मोदकंकृषरंचैव यामार्द्धं न महेश्वरि ।।

पट्टसूत्रं त्रिमासाच्च यज्ञसूत्रं त्र्यहःस्मृतम् । यावदम्भम्भवेदुष्णं परमान्नंन्तथैवच ।

मस्तकं रुधिरंचैव अहोरात्रेणपार्वति । मुहूर्त्तंन्दधिदुग्धञ्च आज्यमूयामेनसुन्दरि

करवीर महीरात्रं विल्वपत्रन्तथैवच । यत्रारक्तश्च मध्यञ्च निर्माल्यंसार्द्धयामके ।
मानस्यैकरवीरस्य पद्मस्यविल्वकस्यच । यामान्तेनमहेशानि ताम्बूलन्दत्तमोत्तत:
म निर्माल्यंचदाडिम्वंतथा विल्वफलम् प्रिये सौगन्धिकंचकदलींप्रयत्ने ननियोजयेत्
कदलीम्बीजपूरञ्चदुग्धंपक्वान्निवेदयेत् ।

## कस्यदेवस्यकः पदार्थोऽधिकप्रियः

दीप प्रिय. कार्त्तवीर्योमार्त्तण्डोनतिवल्लभ । स्तुतिप्रियोमहाविष्णुर्गणेशस्तर्पणप्रिय।
दुर्गार्चन प्रियानून अभिषेकप्रियःशिव: तस्मात्तेषांप्रतोषायविदध्यात्तद्दीहथ: ।
नाक्षतैरर्चयेद्विष्णुं नरक्तचन्दनेनच ।

## प्राणायामेअंगुलिनियमः

कनिष्ठानामिकांगुष्ठैःयन्नासापुटधारणम् प्राणायामस्सविज्ञेयस्तर्जनीमध्यमांविना

## अङ्गन्यासेअंगुलिनियमः

हृदयंमध्यमानामातर्जनीभिः स्मृतं शिरः । मध्यमातर्जनीभ्यां स्याद्गुष्ठेन
शिखास्मृता ।। दशभिःकवचम्प्रोक्तं तिसृभिर्नेत्रमीरितम्

## करशुद्धिविषये अंगुलिनियमः

करशुद्धिकरी विद्यानमध्यमादिसमन्विता अंगुलीशुद्धिरावृत्यकरशुद्धिरियंशुभा ।।

## तालत्रयेअंगुलिनियमः

तर्जनीमध्यमाभ्यान्तुकृत्वातालत्रयन्ततः । छोटिकामुद्रयाकुर्याद्दिग्वंधंदेवतांस्मरन्

## मातृकान्यासेअंगुलिनियमः

ललाटे नामिकामध्ये विन्यसेन्मुखपङ्कजे तर्जनीमध्यमानामावृद्धानामानेत्रयो: ।
अंगुष्ठंकर्णयोर्न्यस्यकनिष्ठांगुष्ठयोर्नसि मध्यास्तिस्त्रोगण्डयोश्चमध्यमाचोष्ठयोर्न्यसेत्
अनामादन्तयोर्न्यस्यमध्यमाचोत्तमांगके मुखेऽनामामध्यमाचहस्तपादेथपार्श्वयो: ।।
कनिष्ठानामिकामध्यास्तास्तुपृष्टेचविन्यसेत्ता: सांगुष्ठानाभिदेशेसर्वा: कुक्षेचविन्यसेत्
हृदयेचतलंसर्वमंशयोश्चककुत्स्थले । हृत्पूर्वं हस्तपत्कुक्षिमुखेषु तलमेव च ।।
एताश्चमातृकामुद्रा:क्रमेणपरिकीर्तिता अज्ञात्वाविन्यसेद्यस्तुन्यास:स्योत्तस्यनिष्फलं

## गंधपुष्पधूपदीपनैवेद्यदानेअंगुलिनियमः

मध्यमानामिकांगुष्ठैरंगुल्यग्रेणपार्वति । दद्याच्चविमलं गंधंमूलमंत्रेणमन्त्रवित्
अंगुष्ठतर्जनीभ्यान्तुचक्रे पुष्पं निवेदयेत् ।

यथागन्धन्तथादेवि धूपन्दद्याद्विचक्षण । मध्यमानामिकाभ्यान्तु मध्यर्वेणि देशिकः
अंगुष्ठाग्रेणदेवेशि धृत्वाधूपन्निवेदयेत् ।। उत्तोलनं त्रिधाकृत्वांगायत्र्यामूलयोगतः ।
तत्वाख्यमुद्रयादेविनैवेद्यन्तुनिवेदयेत् ।। मूलेनाचमनन्दद्यात्ताल तेनैव मुद्रया ।

## तत्वाख्यमुद्रा

अंगुष्ठानामिकायोगेतत्वमुद्रा समीरिता ।

## पवित्रीधारणेअंगुलिनियमः

सर्जनोरूप्यसंयुक्ताहेमयुक्तात्वनामिका सैव कृतातुदर्भेण कार्याविप्रेण सर्वदा

## मुद्राविषयेविशेषवचनम्

सर्वेषांतुदेवानामभयन्दक्षिणेकरे । वरमुद्रातथावामेहस्तेतिष्ठतिसर्वदा ।

## प्रथमन्तावत्प्रातःकृत्यमावश्यकम्

प्रातःकृत्यमकृत्वातुयोदेवीं भक्तितोयजेत् निष्फलातस्य पूजास्य. च कौचहीनायथाक्रिया
पंचतत्वविहीनायाःपूजायांनफलोद्भवः प्रातः कृत्यम्बिनादेविनाधीकारोतुकर्म्मसु

## वैदिकतान्त्रिकभेदेन द्विधासंध्याऽवश्यकी

संध्यात्रयंयथाकुर्याद्ब्राह्मणोविधिपूर्वकम् तंत्रोक्तविधिपूर्वन्तुशूद्रः संध्यां समाचरेत

## यदिपूर्णसंध्यान भवेत्तदासंक्षेपतःसंध्याकार्य्या

संक्षेपसंध्यामथवाकुर्यान्मंत्रीस्वशक्तितः ।। सायम्प्रातश्चमध्यान्हेदेवंध्यात्वामनुं जपेत्
संध्यायोम्पतितायान्तु गायत्रीं दशधाजपेत् ।

## सूर्यार्घमावश्यकम्

(क) आदित्यम्पूजयेदादौ प्रत्यक्षलोकसाक्षिणं अन्यथानैवसिद्धिस्यात्कल्पकोटिशतैरपि
(ख) यावन्नदीयतेचार्घं भास्करायमहात्मने तावन्नपूजयेद्विष्णुं शङ्करम्वामहेश्वरीम्

## सूर्यार्घमंत्रोद्धारः

* प्रणवम्पूर्वमुद्धृत्यवेवीप्रणवमुद्धरेत् हंसः प्रोक्त्वामार्त्तण्डभैरवायदुनर्वदेत् ।।
अग्नेःस्त्रीचतत्पश्चात् सूर्यार्घमितिमुत्तमम् ।

---

* ओं ह्रीं हंसः मार्त्तण्डभैरवाय प्रकाशशक्ति सहिताय इदमर्घ्यंस्वाहा ।

## पंचशुद्धिरावश्यकी

पंचशुद्धिविहीनेनयत्कृतंनचतत्कृतम् पंचशुद्धिविनापूजाअभिचारायकल्पते ॥

## पंचशुद्ध्यन्तर्गतभूतशुद्धिमातृकान्यासस्यावश्यकत्वम्

भूतशुद्धिलिपिन्यासोविनायस्तुप्रपूजयेत् विपरीतफलन्दद्यादभक्त्यापूजनं यथा ॥

## अंगदेवतापूजाक्रमः ।

§ वामावर्त्तक्रमेणैवपूजयेदङ्गदेवताम् इन्द्रादयःस्वीयदिक्षेवपूजनीयाःदिगीश्वराः

## आचमनदानेकालनिर्णयः

स्नाने वस्त्रे च नैवेद्ये द द्यादाचमनीयकम् ।

## घंटावादनसमयः

अर्घ्यपात्राद्यङ्गपर्यन्तं घंटावादनमाचरेत् ।

## केनप्रकारेणघंटावादनम्

उत्तार्यदृष्टिपर्यन्तंघण्टाभ्वामदिशिस्थिताम् । वादयन्वामहस्तेनदक्षहस्तेनचार्पयेत् ॥

## फलपुष्पदानक्रमः

पुष्पाण्यायदिचापन्नंफलन्नेष्टमधोमुखम् । सर्वस्थानेफलन्नेष्टं पुष्पाञ्जलिविधौनच ॥

## पुष्पाञ्जलिमाहात्म्यम्

मंत्रपुष्पोञ्जलेर्दानेसर्वसिद्धिप्रदायकः ।

## शक्तिविषयेमहाकालपूजनमावश्यकम्

महाकालं यजेद्यत्नात्पश्चाद्देवीम्प्रपूजयेत् ।

## पूजान्तेवटुकादिवलिदानमावश्यकम्

अदत्वावटुकादीनांयःपूजयतिचण्डिकाम् विमूलातस्यपूजास्याद्देवीशापःप्रजायते

## वटूकादिवलिदानविधिर्यथा

अथवक्ष्येमहेशानिवटुकादिविधिंशृणु येनानुष्ठितमात्रेणसाधकःसिद्धिमाप्नुयात् ॥

वलिभिस्तर्पिताह्येतेपूजितायस्यसुव्रते सिद्धयस्सकलातस्यकरस्थानात्रसंशयः ॥

तस्मात्तेभ्यःप्रयत्नेनवलिंकुर्यात्तद्धेतुना मांसेनसाधितम्भक्तं खण्डन्दधिसपिष्टकम् ॥

---

§ वामंचस्वशरीरस्य ज्ञातव्यं मन्त्रसाधकैः ;

## वटुकविधिः

ईशानवन्हिनैऋत्यवायुकोणेषुपार्वति । ऐह्येहिदेविपुत्रान्तेवटूकान्तेऽथनाथ च ॥
कपिलान्तेजटाभारभास्वरान्तेत्रिनेत्रच । ज्वालामुखचसर्वान्तेविघ्नान्नाशयनाशय ॥
सर्वोपचारसहितंबलिङ्गृह्णद्विधापदम् वन्हिजायान्वितोमंत्रोवटूकस्यउदाहृतः ॥
ईशानेवटूकंध्यात्वामंत्रेणानेनदेशिकः वामाङ्गुष्ठानामिकाभ्यांबलिन्तस्मैनिवेदयेत्

## गणेशविधिः

गांगींगूं त्रयमालिख्यङेन्तंगणपतिन्ततः । वरान्तेवरदान्तेचसर्वान्तेजनमालिखेत् ॥
मेवशंचानयप्रोच्यबलिङ्गृह्णद्विधापदम् वन्हिजायान्वितोमंत्रोगणपस्यउदाहृतः
वन्हिकोणेमहेशानिमंत्रेणानेनसाधकः गजतुण्डयामुद्रयाचबलिन्तस्मैसमर्पयेत् *

## क्षेत्रपालविधिः

षडदीर्घस्वरसंभिन्नक्षकारम्विलिखेत्प्रिये ततःक्षेत्रपदंपालधूपदीपादिवालिखेत्
सहितंबलिमालिख्यगृह्णगृह्णततोवदेत् वन्हिजायान्वितोमंत्रःक्षेत्रपालस्यपार्वति
मंत्रेणानेनदेवेशिनैऋत्यान्दिशिसाधकः वाममुष्टिम्विधायादौतर्जनीसरलाङ्गुरु ॥
अनयामुद्रयाचैवबलिन्तस्मैनिवेदयेत् ।

## योगिनीविधिः

यामात्मकंसमुच्चार्ययोगिनीभ्यस्ततःपरम् स्वाहान्तेसर्ववर्णान्तेयोगिनीपदमालिखेत्
कार्यंचास्त्रमालिख्यवन्हिजायांपुनर्लिखेत् मंत्रेणानेनदेवेशिवायव्यांसाधकोत्तमः ॥
अंगुष्ठमध्यमानामायोन्याकारेणयोजयेत् मुद्रयापरयाचैवयोगिनीनाम्बलिंहरेत् ॥
कृताञ्जलिस्ततोदेविसंप्रार्थयेदनेनतु ।
ॐ ब्रह्माण्डतोवादिविगगनतलेभूतलेनिस्तलेवा
पातालेवानलेवासलिलपवनयोर्यत्रकुत्रस्थितोवा
क्षेत्रेपीठोपपीठादिषुचकृतयदाधूपदीपादिकेन
प्रीताः देव्यस्सदानःशुभबलिविधिनापान्तुवीरेन्द्रवंद्याः

---

* मुष्टिमध्यस्थितांदेविमगुलीन्दण्डवत्कुरु गजतुण्डामहामुद्रागणपस्यसदाप्रिया ।

## पूजाकाले देवस्यमस्तकोपरिकरन्नभ्रामयेत्

देवस्यमस्तकेकुर्यात्कुसुमोपहितंसदा । पूजाकालेदेवताथाम्नपरिभ्रामयेत्करम् ॥

जपविषयः

## नैत्तिकपुरश्चरणजपसंख्या

अष्टोत्तरशतंजाप्यंयावज्जीवितसंख्यया । सहस्रम्वाजपेद्देविनित्यपूजाविधौपुनः ॥
अशक्तश्चेद्विंशत्यंतन्न्युनं न जपेत् प्रिये ।

## नैमित्तिकपुरश्चरणजपसंख्या

पक्षस्थासमारभ्यतज्जप्तव्यन्दिनेदिनेलक्षावधिकन्तक्तव्यमासमाप्तंसदाजपेत्

## यत्रमन्त्रौपुरश्चरणसंख्यानोक्तातत्र कर्त्तव्यताकेति

(क) प्रणवेनरहितोमंत्रस्तत्रयस्यादयुतं जपः ।

(ख) येषांजपेचहोमेचसंख्यानोक्तामनीषिभिःतेषामष्टसहस्राणिसंख्यास्याज्जपहोमयोः

(ग) होमसंख्यातुसर्वत्रसहस्रादयुतावधि प्रकल्पनीयामंत्रज्ञैः कार्यगौरवलाघवात्

(घ) होमविषयेसंख्याविचारः

संख्याऽनुक्तेसहस्रंस्याद्द्रव्याऽनुक्तेघृतन्तथा
समिधाऽनुक्तविषयेपालाशःपरिकीर्त्तितः ।

## नैत्तिकजपःकरमालायाम्भवेन्ननैमित्तिकः

नित्यंजपंकरेकुर्यान्नतुकाम्यं कदाचन ।

## जपेमालापरिवर्त्तनक्रमः

मध्यमायांस्थितामालाज्येष्ठेनावर्त्तयेत्सुधीः शांतौवश्येतथापुष्टौभोगमोक्षार्थकेजपे

## जपकालेकम्पनादिफलम्

कम्पनात्सिद्धिहानिःस्याद्धूननम्बहुदुःखकृत्शब्देजातेभवेद्रोगःकरभ्रष्टोविनाशकृत्
छिन्नेसूत्रेभवेन्मृत्युस्तस्माद्यत्नपरोभवेत्

## शक्तिमनोरतिरिक्तस्यजपसमयः

प्रातःकालंसमारभ्य जपेन्मध्यदिनावधि

## शक्तिविषयेजपसमयः

गतेतुप्रथमेयामेतृतीयप्रहरावधि निशायान्तुप्रजप्तव्यं रात्रिशेषेजपेन्नतु

॥ त्रिविधिजपनिरूपणम् ॥

## मानसः

निजकर्णागोचरोयः समानसोजपस्मृतः

## उपांशुः

उपांशुनिजकर्णस्यगोचरः परिकीर्त्तितः ।

## वाचिकः

मन्त्रमुच्चारयेद्वाचा वाचिकस्सजपःस्मृतः

## मानसादिजपफलम्

मानसस्सिद्धिकामायपुष्टिकामेउपांसुकः वाचिकोमारणेचैवप्रशस्तोजपईरितः

## जपेमंत्रोच्चारणक्रमः

नद्रुतं न बिलम्बंचजपेन्मौक्तिकहारवत्

## जपकालेवर्जनीयम्

(क) आलस्यं जृम्भणंनिद्रांक्षुतंनिष्ठीवनम्भयम् नीचाङ्गस्पर्शनंकोपंजपकाले विवर्जयेत्

(ख) व्यग्रतालस्यनिष्ठीवक्रोधपादप्रसारणम् अन्यभाषांम्भृपंचैवजपकालेत्सजेत्सुधीः

## अनायासेनालस्यादौकर्त्तव्यताकेति

सकृदुच्चरितेशब्दे प्रणवंसमुदीरयेत् । प्रोक्तेपरिशिरेशब्दे प्राणायामंसकृच्चरेत् ।

बहुप्रलापीआचम्यन्यस्याङ्गानिततोजपेत् पतितानामं[illegible]नान्दर्शनेभाषणेश्रुते ।

क्षुतेऽधोवायुगमनेजृम्भणेजपमुत्सृजेत् तथाच तस्यतत्प्राप्तप्राणायामंषडङ्गकम् ।

कृत्वासम्यक्जपेच्छेषं यद्वासूर्यंदर्शनम् ।

(ग) क्षुतेप्येवंतथास्पृश्यस्थानचस्पर्शनेनचएवमादींश्चनियमान्पुरश्चरणेसकृच्चरेत्

विण्मूत्रोत्सर्गशङ्कादियुक्तःकर्मांकरोतियः । जपार्चनादिकंसर्वमपवित्रम्भवेत्प्रिये ।

## जपैमंत्राणामतः परंकान्यङ्गानि

(क) मंत्रशिखामंत्रचैतन्यं मन्त्रार्थभावनन्तथा गुरुध्यानमिष्टध्यानंकुल्लुकांसेतुमेवच महासेतुं कवचसेतुं निर्वाण शृणुकालिके ; बंधनंयोनिमुद्रायाकरन्न्यासन्तथैवच अङ्गन्यासं प्राणायामं मुखशुद्धिं तथाजपेत् । प्राणयोगंदीपनं च सूतकद्वयमोक्षणम् मूलमंत्रजपंपश्चात् हृष्त्यामध्येभ्रुवोद्वयो. अकारादिक्षकारान्तैर्विन्दुयन्मातृकाक्षरैः अनुलोमविलोमस्थैः क्लृप्तयावर्णमालया पुनः सेतुं जपंकुर्यात्सूतकद्वयमोक्षणम् प्राणायामंचततपश्चात्कृत्वाजपसमापयेत् ।

(ख)मुखशोधन मन्त्रचैतन्यंसूतकद्वयमोक्षणम् महासेतुश्चसेतुश्चकवचसेतुन्तथैवच कुल्लूकांजपमासाद्य इष्टमन्त्रन्तथाजपेत् अकारादिक्षकारान्तैं बिन्दुवन्मातृकाक्षरैः अनुलोमविलोमस्थैः क्लृप्तयावर्णमालया कुल्लुकांचपुनर्जप्त्वा कवचसेतुञ्जपेत्पुनः पुनःसेतुम्पुनर्विद्वान् महासेतुञ्जपेत्सुधीः सूतकद्वयमोक्षार्थं तारञ्जप्त्वासमापयेत्

पाठ प्रकरणम् ॥

## स्तोत्रपाठेप्रणवस्यावश्यकत्वम्

प्रणवञ्चादौजप्त्वास्तोत्रंवासंहितांम्पठेत् अन्तेप्रणवन्दद्यादि त्युवाचादिपूरुषः सर्वपाठेषुज्ञेयो ह्यन्यथानिष्फलम्भवेत्

## सम्पुटप्रकारः

(क)सम्पुटाख्यस्यपाठस्यविधानंशृणुपार्वति मुखंमुखेनसंयोज्यपुच्छंपुच्छेनयोजयेत स्वेष्ट मन्त्रंसमुच्चार्यततसप्तसतीमनुम् पुनरिष्टविलोमेन पठेत्स्तोत्रमनन्यधीः

(ख) सम्पुटंद्विविधंज्ञेयंसाम्यमुग्रंशुभाशुभम् अनुलोमम्पठेन्मन्त्रंमूलमन्त्रन्तथापठेत् अनुलोमंपुनमन्त्रंसाम्यंसत्तंसुकर्मसु

(ग) अनुलोमंजपेन्मन्त्रम्मूलमन्त्रंततःपठेत् अन्ते मन्त्रंविलोमन्तुचोग्रंक्रूरकर्मसु

## शृङ्खलाप्रकारः

आदौमूलम्पठेद्देवि पश्चान्मन्त्रंपठेत्सुधीः पुनर्मूलम्पुनर्मन्त्रंएवंकुर्य्यात्पुनःपुनः । मूलेसमापयेद्विद्वान् शृङ्खलायोगमुत्तमम् । प्रशस्तंसर्वकार्येषुसर्वस्थानेच सर्वदा

## स्तोत्रपाठेनियमविशेषः

नमानसम्पठेत्स्तोत्रंवाचिकन्तुप्रशस्यते कण्ठतःपाठभावेतु पुस्तकोपरिवाचयेत् नस्वयंलिखितंस्तोत्रं नाब्राह्मणलिपिम्पठेत्

## स्तोत्रकवचयोःपाठेकालनिरूपणम्

पूजादौवाच यं स्तोत्रंपूजान्तेकवचम्पठेत्

### होम प्रकरणम्

## जपदशांशेनहोमः

जपानान्तुदशांशेन जुहुयात्साधकोत्तमः

## होमसंख्याद्रव्याऽनुक्तेचहोमकर्त्तव्यनिरूपणम्

संख्याऽनुक्ते सहस्रं स्याद्‌द्रव्याऽनुक्ते घृतन्तथासमिधानुक्तविषयेपालाशःपरिकीर्त्तितः,

## होमेविहितवन्हिः

सूर्य्यकान्तादरणितःश्रोत्रियागारतोऽपिवा पात्रेणपिहितेपात्रेवन्हिंचैवसमानयेत्

## अग्नेर्दशसंस्कारोः

ओमस्याग्नेरमुंसंस्कारङ्करोम्यग्निवल्लभा । इत्थंमनुंजपन्गर्भाधानंपुंसवनन्ततः
सीमन्तोनयनंपश्चात् जातकर्मंततश्चरेत् । कुर्य्याद्वैचाभिधानेननामकरणंचपूर्ववत्
अन्नप्राशनन्तथाचौलोपनयनोदारयोजनम् संस्काराःस्युर्विवाहान्ताःमृत्यंताकू-
[रकर्मणि

## कर्म्मभेदेनाग्निसंस्कारनियमः

शुभकार्येविवाहान्तामृत्यन्ताक्रूरकर्म्मणि ।

## कार्य्याऽनुसारेणहोमकालनिरूपणम्

ग्रीष्मेउच्चाटनंकुर्यात्स्तम्भनम्प्रावृषितथा शरदेशान्तिकंकुर्याद्धेमन्तेमोहनंकुरु ॥
शिशिरेमारणंज्ञेयं वसन्ते वश्यकर्म्मंच ।

## अहोरात्रेवसन्तादिकालविचारः

वसन्तश्चैवपूर्वान्हेमध्यान्हेग्रीष्मउच्यते । अपरान्हेभवेद्वर्षाशरच्चैवार्द्धरात्रिके ।
ऊषोहेमन्तकश्चैवसंध्यायांशिशिरस्मृतः ।

## कार्यभेदेनहोमेविशेषदिङ्निरूपणम्

धर्मार्थकाममोक्षाणांकामःपूर्वमुखोहुनेत् । मोहनेमारणेचैवदक्षिणाशामुखोहुनेत् ॥
उच्चाटनेतूत्तरस्यांदिशामेवंव्यवस्थितिः ।

## यस्यमंत्रस्यहोमपदार्थोऽनुक्तस्तत्रकामभेदेनपदार्थभेदः

पलाशपुष्पहोमेनसर्वज्ञत्वमवाप्नुयात् अश्वत्थस्यसमिद्धोमाद्ब्रह्मण्यंसुस्थिरम्भवेत्
दुर्वाहोमादवाप्नोतिदीर्घायुष्पंनसंशयः अन्नाज्यहोमादाप्नोतिमुनिराज्यंद्विजोत्तमः
कन्याकामो लभेत्कन्यांलाजाहोमे न सुव्रत । वैराग्यकामो वैराग्यं लभते घृतहोमतः
श्रियार्थी श्रियमाप्नोतिबिल्वपत्रस्यहोमतः पुत्रकामोलभेत्पुत्रं जीवपुत्रस्यहोमतः
आरोग्यकामआरोग्यंलभते तिलहोमत : यद्यदिच्छतितत्सर्वं लभते पुष्पहोमतः ॥

## होमेयेषांदोषाणांस्थितिश्चेत्तच्छान्तिप्रकारः

एवम्विधेषुदोषेषुप्रायश्चित्तायदेशिकः । मूलेनाज्येनजुहुयात्पंचविंशतिमाहुतिम् ॥

## होमाशक्तस्यकर्त्तव्यभागः

होमकर्म्मण्यशक्तानाम्विप्राणांद्विगुणंजपः । इतरेषांचवर्णानांत्रिगुणादिःसमीरितः

## कर्म्मभेदेन होमेकः पल्लवोयोजनीयः

चतुर्थखण्डस्यांगेऽवलोकनीयः ॥

## तर्पणप्रकारः

हवनस्यदशांशेन तर्पणन्तुभवेध्रुवम् ।

## केनपाणिनातर्पयेत्

वामेनपाणिनाशक्तिं देवान्यं दक्षिणेन च । तर्पयेद्बहुयत्नेन व्युत्क्रमं नैवकारयेत् ॥

## शक्तिविषयेतर्पणप्रकारः

अंगुष्ठानामिकायोगेवामहस्तस्यपार्वति । तर्पयेच्छक्तिविषयेसमुद्रां च सवाहनीम् ।

## तर्पणजलेयोजनार्हःपदार्थःकः

ग्रंथेऽस्मिन् षट्कर्म्मप्रकरणेऽवलोकनीयः ।

## तर्पणंकेन रूपेणपल्लवोयोजनीयः

मंत्रान्तेनामसंयोज्यतर्पयामिततोवदेत् स्वाहातदन्ते शक्तौतुदेवान्येचनमोवदेत् ।

मार्जनप्रकारः

## मार्जनम्

तर्पणस्यदशांशेनसाधकोमार्जनंचरेत् ।

## मार्जनेकेनरूपेणकःपल्लवोयोजनीय

मंत्रं तेनामसंयोज्यमार्जयामिततोवदेत् स्वाहातदन्तेशक्तौतुदेवान्येच नमोवदेत् ।

## ब्राह्मणभोजनप्रकारः

मार्जनस्यदशांशेनब्राह्मणान् भोजयेत्सुधीः ।

## ब्राह्मणभोजनेकीदृशोब्राह्मणोग्राह्यः

अतिशुद्धकुलोत्पन्नाःसाङ्गवेदविदोऽमलाः सदाचाररताविप्राःकुलाचाररतास्सदा

## अग्राह्यान्ब्राह्मणान्परिगणयति

दीक्षाहीनान्पशून्यस्तु भोजयेद्वास्वमन्दिरे सयातिपरमेशानिनरकानेकविंशति ॥

प्रदक्षिणाप्रकारः ।

## विष्णुः

सव्यहस्तेन सर्वत्रदक्षिणम्परिकीर्त्तितम् ।

## शिवः

अर्धचन्द्रम्महेशस्य पृष्ठतश्चसमीरिता । शिवप्रदक्षिणेमंत्रीअर्धचन्द्रक्रमेणतु ॥

सव्यासव्यक्रमेणेवसोम सूत्रन्नलङ्घयेत् ।

## शक्तिः

त्रिकोणाकारसर्वत्रनतिःशक्तेःसमीरिता दक्षिणाद्वायवींगत्वादिशंतस्याश्चशाम्भवीम्
पूज्यपूजकयोर्मध्येयाप्राचीसमुदाहृता क्रमेणात्रापिदेवस्यदिक्ज्ञानं चप्रदक्षिणम्

## अन्यदेव

ततश्चदक्षिणांकृत्वानमस्कारत्रिकोणवत् प्रसार्यदक्षिणंहस्तंस्वयंनम्रशिरःपुनः ॥
दर्शयेद्दक्षिणम्पार्श्वं मनसापिचदक्षिणः । त्रिधाचवेष्टयेत्सम्यक् देवतायाःप्रदक्षिणे
प्रणामनकरणम् ।

## पञ्चाङ्गप्रणामः

बाहुभ्यांचसजानुभ्यामुरसाशिरसादृशा पंचाङ्गकःप्रणामःस्यात्पूजासुप्रविशन्विभो

## अष्टांग प्रणामः

पद्भ्यांकराभ्यांजानुभ्यांउरसाशिरसादृशा वचसामनसाचापिप्रणामोऽष्टाङ्गईरितः

पूजा प्रकार: ।

## चतु:षष्ठ्युपचाराणि:

पाद्यमर्घमासनं चसुगंधितैललेपनम् । मज्जनान्तेप्रवेशश्चशालायाम्मज्जनंपुन: ॥
पीठोपवेशनं दिव्यस्नानीयमुद्वर्त्तनम् । उष्णोदकेनस्नानंतु सुवर्णकलशच्युतं ॥
सर्वतीर्थाभिषेकंचपरिधानंधौतवस्त्रकं अरुणस्यदुकूलस्यपरिधानमरुणस्य च ॥
दुकूलस्योत्तरीयंचालेपमण्डलेपुन: । प्रवेशमालेपनंतुमणिपीठोपवेशनम् ॥
चन्दनागुरुकर्पूरकुम्कुमंमृगमदंतथा । कस्तूरीरोचनादिव्यसुगंधिद्रव्यमेवच ॥
एभि:पदार्थैर्देवानां सर्वाङ्गानुविलेपनम् । लेपनंकेशभारस्यकालागुरुचधूपकम् ॥
मल्लिकामालतीजातीचम्पकाशोकमेवच । शतपत्रंतुपुन्नाग:पूगकल्हारकस्तथा ॥
पुन्नागकल्हारयुग्मंसर्वर्त्तुकुसुमै:पुन: । मालाभूषणंदद्यात्प्रवेशंमण्डपेपुन: ॥
भूषणंचततोदद्यान्मणिपीठोपवेशनम् । मुकुटंनवमणेश्चन्द्रखण्डंसोतंचसिन्दूरम् ॥
तिलकंरत्नंचाञ्जनंवासोयुगलंतथा । नासाभरणकंचैवपायकाधरशोभितम्
ग्रंथनंभूषणंस्वर्णविचित्रपदकंपुन: । महाचपदकंमुक्तावलिमेकावलिन्तथा ॥
देवछन्दककेयूरयुगलं तु चतुष्टयम् । वलयावलिंप्रदद्याच्चोर्म्मिकाबलिमेवच ॥
कांचीदामकटिसूत्रंशोभाख्याभरणंतथा । पादकंरत्ननूपूरंपादाङ्गुलीयकंतथा
एकस्मिन्करेपाशमन्येऽङ्कुशमेवच । कराम्येइपुचापंचपुष्पबाणान्तथापरे ॥
माणिक्यपादुकांदद्यात्सिंहासनाधिरोहणम् पर्यङ्कोपवेशंचामृतपूर्णम्पानपात्रकम्
आचमनीयन्ततोदद्यात्कर्पूरवटिकांपुन: । मंगलार्त्तिश्वेतछत्रंचामरंयुगलन्तथा ॥
दर्पणंतालवृन्तं चगंधंपुष्पंचधूपकम् । दीपंसुस्वादुनैवेद्यमुपचारम्प्रकल्पयेत् ॥
चतु:षष्ठ्युपचाराणामभावेतन्मनुं जपेत् ।

## अष्टादशोपचार:

आसनंस्वागतम्पाद्यंचार्घ्यमाचमनन्ततः स्नानम्वासोपवीतञ्चभूषणानिचसर्वश:
गन्धम्पुष्पन्तथाधूपं दीपमन्यच्चदर्पणम् माल्यानुलेपनञ्चैव नमस्कारविसर्जनम्
अष्टादशोपचारैस्तु मन्त्रीपूजां समाचरेत्

## षोड़शोपचार:

पाद्यार्घ्याचमनीयन्तुस्नानम्वस्त्रंचभूषणम् गन्धंपुष्पं धूपदीपं नैवद्याचमनन्तथा
ताम्बूलमर्च्चनास्तोत्रं तर्पणंचनमस्क्रिया प्रयोजयेत्पूजायामुपचारास्तुषोढ़श

## दशोपचार:

पाद्यमर्घ्यंतथाचम्यमनुपकाचमनन्ततः गन्धादयोनिवेद्यान्ताउपचाराःदशक्रमात्

## पंचोपचार:

गन्धंपुष्पंतथाधूपं दीपंनैवेद्यमेवच अखण्डफलमासाद्य कैवल्यंलभतेध्रुवम्

## संक्षेपपूजाविधिर्यामले

आदावृष्यादिविन्यासःकरशुद्धिस्ततःपरम् अंगुलीव्युत्क्रमौकृत्वाहृदादिन्यासएवच
तालत्रयंचदिग्बन्धःप्राणायामस्ततःपरम् ध्यानंपूजाजपश्चैवसर्वतन्त्रेष्वयंविधिः
जपार्थसर्वमन्त्राणांविन्यासंचलिपिभ्विना कृतेतद्विफलंविद्यात्तस्मादादौलिपिन्यसेत

## संक्षेपोवृहद्वापूजादेशकालानुसारतः

पूजाकर्मविशेषेणदेशकालानुसारतः यथाशक्तियथान्याय्यंयथालोकविगर्हितम्
पूजाविस्तरतःकर्तुं योनशक्तोस्तिमानवः सइहाङ्गेन्द्रवज्राद्यैःपूजयेदिष्टदेवताम्
अथवामानसींकुर्य्यात्तत्पूजांमथापिवा अथवाकेवलाम्पूजाम्बाह्यांकुर्य्याद्विचक्षणः
अर्घमात्रेऽसमर्थश्चेद्द्यादर्चनसाधनम् सम्पूज्यैवजपंकुर्य्यान्नमन्त्रंकेवलंजपेत्
भूतशुद्धिलिपीन्यासौकृत्वापुजांसमाचरेत् अथवामातरंध्यात्वास्मरकृचैवप्रपूजयेत्

## कस्मिन्समयेकतिपरिमितापूजा

स्वगृहेपूर्णमाचारस्त दर्द्धंपरतोगृहे तदर्द्धंमार्गमध्येतुरोगार्त्तेनतुकिंचन

इति खरे श्री वास्तव्य कायस्थकुलावतंस श्री राय लक्ष्मण
प्रसादात्मजेन श्री राय ईश्वरी प्रसादेन संगृहीते
गुप्तसार संग्रहे पञ्चमखण्डः समाप्तः.

—(✻)—

# षष्ठम खण्डे पुरश्चरण विचारः ॥

## पुरश्चरणपंचाङ्गानि

होमोतर्पणंचाभिषेकोविप्रभोजनमेवच पञ्चाङ्गोपासनंलोके पुरश्चरणमिष्यते

## पुरश्चरणविषयेप्राणप्रतिष्ठाविधिः

स्थापयेन्मनुनानेनप्राणान्सर्वत्रदेशिकः बीजान्ते मुख्यशब्दानोमादौ दूतीं प्रयोजयेत्
अष्टवानुसाध्यहृत्प्राणान्स्थापयेदात्मनोहृदि क्रूरकर्मसुपुत्तल्यांतेषांस्थापनमीरितम्
पुरश्चरणकालेजपसंख्यापंचमखण्डेजपप्रकरणेऽवलोकनीया ।

## पूर्तिनिर्भिनापिपुरश्चरणम्भवितुमर्हति

जीवहीनोयथादेहीसर्वकर्मसुनक्षमः पुरश्चरणहीनोपितथामंत्रःप्रकीर्त्तितः ॥
तस्मादादौस्वयंकुर्याद्गुरुस्त्राकारयेद्बुधः गुरोरभावेविप्रन्तुसर्वप्राणहितेरतम् ॥

## पुरश्चरणकालेमृतसूतककृतदोषाभावः

(क) पुरश्चरणकालेतुयदिस्यान्मृतसूतकम् तथापिकृतसंकल्पोव्रतंनैवपरित्यजेत् ।
(ख) श्राद्धादेरनुरोधेनयदिजापंत्यजेन्नरः सभवेद्देवताद्रोहीपितॄन्सप्तनयत्यधः ।

## आवश्यकपुरश्चरणेमासादीनांशोधनाभावः

अत्यावश्यककार्येषु मासादीनां न शोधनम् ।

## पुरश्चरणस्थानम्

पंचमखण्डेस्थानप्रकरणेऽवलोकनीयम् ।

## पुरश्चरणकालेभक्षणादिनियमः

दधिक्षीरंघृतंगव्यमैक्षवंगुड़वर्जितम् । तिलश्चैवसितामुद्गाकन्दःकेमुकवर्जितः ।
नारिकेलफलं चैवकदलीलवणीतथा । आम्रमामलकंचैवपनसंचहरीतकी ॥
व्रतान्तरेप्रशस्तानिहविष्यंमन्यतेबुधैः । भुञ्जानोवाहविष्यान्नंशाकपावकमेवच ॥
पयोमूलंफलञ्चापि पलंयत्नोपलभ्यते ।

## पुरश्चरणकर्त्तुःसिद्धिकराणिद्वादशधर्मनियमानि

भूशय्याब्रह्मचारित्वंमौनमाचार्यसेविता नित्यंत्रिसमयस्नानंक्षुद्रकर्मविवर्जितम् ।
नित्यं पूजानित्यदानंदेवतास्तुतिकीर्त्तनम् नैमित्तिकार्चनंचैवविश्वासोगुरुदेवयोः
जपनिष्ठाद्वादशैतेधर्म्मास्युर्मंत्रसिद्धिदाः ।

# पुरश्चरणकालेवर्जनीयानि

(क) वर्जयेन्मधुकाक्षारलवणं तैलमेवच ताम्बूलंकांश्यपात्रंच दिवाभोजनमेवच ।

(ख) क्षारंचलवणंमांसंगृञ्जनंकांश्यभोजनम् माषाढ़कीमसूराश्चकोद्रवाश्चणकानिच

कौटिल्यंक्षौरमभ्यङ्गमनिवेदितभोजनम् असङ्कल्पितकृत्यंचवर्जयेन्मर्दनादिकम्

स्नायाच्चपंचगव्येनकेवलामलकेनवा मंत्रंजप्त्वान्नपानीयैः स्नानाचमनभोजनम्

कुर्याद्यथोक्तविधानालिसंध्यन्देवतार्चनम् अपवित्रकरोलग्नःशिरसश्चावृतोपिवा

प्रलपन्प्रजपेद्यावत्तावन्निष्फलमुच्यते ।

(ग) यस्यान्नपानपुष्टाङ्गः कुरुतेधर्मसंचयम् अन्नदातुःफलश्चार्द्धंकर्त्तुश्चार्द्धंन्नसंशयः

तस्मात्सर्वप्रयत्नेनपरान्नंवर्जयेत्सुधीः

तत्रासमर्थोऽनुदिनंविशुद्धया याचेतयावाङ्गनमात्रभक्ष्यान्

गृह्णातरागादधिकंनसिद्धिः प्रजायतेकल्पशतैरमुख्ये

(घ) स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् असत्यंभाषणंजिह्मभाषणंपरिवर्जयेत्

सत्येनापि न भाषेतजपहोमार्चनादिषु अन्यथाऽनुष्ठितं सर्वंभवत्येवनिरर्थकम्

(च) असत्यभाषणञ्चाचंकुटिलानाञ्चिवर्जयेत् वर्जयेद्गीतवाद्यादिश्रवणंनृत्यदर्शनम्

अभ्यङ्गं गंधलेपं च पुष्पधारणमेवच त्यजेदुष्णोदकस्नानमन्यदेवप्रपूजनम् ॥*

(छ) विपर्य्यासंनकुर्याच्चकदाचिदपिमोहतः उपर्य्यधोवहिर्वस्त्रेपुरश्चरणकृन्नरः

## विशेषपुरश्चरणम्

### ग्रहणकाले

ग्रहणेऽर्कस्यइन्दोर्वाशुचिपूर्वमुपोषितः नद्यांसमुद्रगामिन्यांनाभिमात्रोदकेस्थितः ।

स्पर्शाद्विमुक्तिपर्यन्तं जपेन्मंत्रमनन्यधीः अथवापुण्योदकेस्नात्वाशुचिःपूर्वमुपोषितः

ग्रहणादिविमोक्षान्तं जपेन्मंत्रंसमाहितः जपाद्दशांशतोहोमन्तथाहोमात्तुतर्पणम्

एवंकृत्वातुमंत्रस्यजायते सिद्धिरुत्तमा ।

### ग्रस्तास्तग्रस्तोदयेजपनिषेधः

ग्रस्तास्तह्युदितेनैवकुर्याद्दीक्षाजपम्प्रिये कृतेनाशोभवेदाशुह्यायुःश्रीसुतसम्पदाम् ।

---

* एतस्माद्वचनादेवज्ञातव्यंसाधकोत्तमैः इष्टस्यैवचमन्त्रेण कार्यंसर्वंहिसाधयेत्

## गृहण कालेविशेषः

अथवान्यप्रकारेणपुरश्चरणमुच्यते दृष्ट्वौपरागंयत्कुर्यात्तच्छृणुष्ववरानने ॥
कुतःस्नानंकुतः संध्याप्राणायामःकुतः प्रिये भूतशुद्धिं कुतोभद्रे कुतःपूजावरानने
कालात्ययभयाद्दे विसर्वंसन्त्यज्यकामिनि सङ्कल्पंमानसंकृत्वाजपंकुर्याद्वरानने ॥
सङ्कल्पंविद्धिदेवेशिमानसंयदुपस्थितम् तत्संकल्पंविजानीयाद्ग्रहणेचन्द्रसूर्ययोः
तस्माच्चचञ्चलापाङ्गिसङ्कल्पंनैवकारयेत् सङ्कल्पंमानसंदेविचतुर्वर्गफलप्रदम् ॥

## गृहणकालेमृतसूतकशौचाभावः

चन्द्रसूर्योपरागेतु न भवेन्मृतसूतकम् निर्विकल्पमनादेविजपेन्मंत्रमनन्यधीः ॥

## त्रिल्ववृक्षस्थलेपुरश्चरणम्

विल्ववृक्षं समाश्रित्ययोमंत्रान्विविधाञ्जपेत् एकेनदिवसेनैवतत्पुरश्चरणम्भवेत् ।
यस्तुविल्ववनेनित्यंकुटींकृत्वाजपेन्नरः सर्वंमंत्राःप्रसिद्ध्यन्तिजपमात्रेणकेवलम् ।

## पर्वाणि

अमावास्यासोमवारेभौमवारेचतुर्द्दशी सप्तमीरविवारे च सूर्यग्रहशतैः समाः ॥

## ऐकान्हिकपुरश्चरणम्

सूर्योदयं समारभ्य यावत्सूर्योदयान्तरम् तावज्जप्तोमहेशानिपुरश्चरणमिष्यते ॥

## शक्तिविषये

(क) कुजेवाशनिवारे वानरमुण्डंसमाहृतम् पञ्चगव्वेनमिलितं चन्दनाद्यै र्विशेषतः
निक्षिप्यभूमौहस्तार्द्धमानतःकाननेवने तत्रतद्दिवसेरात्रौसहस्त्रयदिमानवः
एकाकीप्रजपेन्मन्त्रंसभवेत्कल्पपादयः

(ख) शवमानीयतद्वारेतेनैवपरिखन्यच तद्दिनेतद्दिनंय।वत्तावदष्टोत्तरंशतम्
तेनैवसर्वसिद्धोशोनात्रकार्य्याविच।रणा

(ग) अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोरपि सूर्योदयंसमारभ्ययावत्सूर्योदयान्तरम्
तावज्जपेन्निरातंकः सर्वसिद्धोश्वरोभवेत्

(घ) शरत्कालेचतुर्थ्यादिनवम्यान्तम्विशेषतःभक्तितःपूजयित्वातुरात्रौतावत्सहस्त्रकम्
(च) कृष्णाष्टमीसमारभ्ययावत्कृष्णाष्टमीभवेत् सहस्त्रसंख्यंजप्त्वातुपुरश्चरणमिष्यते
(छ) कृष्णाचतुर्दशीम्प्राप्यनवम्यान्तं महोत्सवे अष्टमीनवमीरात्रौपूजांकुर्याद्विचक्षणः

दशम्याम्पारणं कुर्यात्मत्स्यमांसादिवर्जितः षट्सहस्त्रंजपेन्नित्यं देव्याभक्तिपरायणः
(ज) चतुर्दशींसमारभ्ययावदन्याचतुर्दशी तावज्जपेन्महेशानिपुरश्चरणमिष्यते
(झ)सूर्योदयंसमारभ्ययावत्सूर्योस्तगोभवेत् तावत्संख्याजपेन्नास्यपुरश्चरणमिष्यते

इति खरे श्री वास्तव्य कायस्थ कुलावतंस श्री राय लक्ष्मण प्रसादात्मजेन श्री राय ईश्वरी प्रसादेन संगृहीते गुप्तसार संग्रहे षष्ट खण्डः समाप्तः

—(०)—

# सप्तम खंडे देवतानामानि

## पंचदेवतानामानि

विष्णुः शिवोगणेशोऽर्कोदुर्गापंचैवदेवताः ।

## पंचदेवानाम्पूजनक्रमः

रविर्विनायकश्चण्डीईशोविष्णुस्तुपंचमः क्रमेणानेनपूज्यन्ते व्युत्क्रमेणमहद्भयम् ।

## अंगदेवानाम्पूजनक्रमः

वामावर्त्तक्रमेणैवपूजयेदङ्गदेवताम् इन्द्रादयःस्वदक्षिणेवपूजनीयाः दिगीश्वराः ॥

## पञ्चवालकाः

हेरम्बवटुजन्मानौ कार्त्तवीर्य्यार्जुनस्तथा । हनुमद्भैरवाप्येतेभाषितापञ्चवालकाः ॥

## षट्कुमारकाः

हेरम्बवटुजन्मानौमहामृत्युंजयस्तथा । कार्त्तवीर्य्यार्जुनश्चैवहनुमद्भैरवौ तथा ॥
स्वयंमयास्वतंत्रोक्ताभाषिताःषट्कुमारकाः

## सप्तबालकाः

गणेशोबटुकश्चैवस्कंदोमृत्युंजयस्तथा कार्तवीर्य्यार्जुनोप्येवसुग्रीवोहनुमांस्तथा ॥
रुद्रस्यया मलेचैतेभाषिताःसप्तबालकाः ६

## सप्तदेव्यः

श्रीवज्रयोगिनीदेवीवाराहीशारदातथा । कामेश्वरीतथागौरीह्यन्नपूर्णातथैव च

कुलवागीश्वरीह्येता। सप्तदेव्य।श्रुतामया

## दशमहासिद्धविद्याः

कालीतारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा ॥
बगलासिद्धविद्याचमातंगीकमलात्मिका एतादशमहाविद्याःसिद्धविद्याप्रकीर्तिताः ॥

## दशमहासिद्धविद्याउपासनाफलानि

कलौकृष्णत्वमासाद्यशुक्लापिनीलरूपिणी । लीलयावाक्प्रदाचेतितेननीलसरस्वती॥
तारकत्वात्सदातारातारिणीचप्रकीर्तिता भुवनानांपालकत्वाद्भुवनेशीप्रकीर्तिता ॥
श्रीदात्रीचसदाविद्याश्रीविद्याचप्रकीर्तिता निर्गुणाचमहादेवीषोडशीपरिकीर्तिता ।
भैरवीदुःखसंहन्त्रीयप्रदुःखविनाशिनी । कालभैरवभार्य्या च भैरवीपरिकीर्तिता ॥
त्रिशक्तिफलदादेवीछिन्नाचैवशुरेश्वरी । त्रिगुणा च महादेविमोहिनीमोक्षदा ।
धूमावतीमहामायाधूम्रासुरनिसूदनी । धूमरूपामहादेवीचतुर्वर्गप्रदायिनी ॥
जगन्माताजगद्धात्रीजगतामुपकारिणी । बकारेवारुणीदेवीगकारेसिद्धिदास्मृता ॥
लकारेपृथिवीचैवचैतन्यामेप्रकीर्तिता । मातंगीमदशीलत्वान्मतंगासुरनाशिनी ॥
सर्वोपकारिणीदेवीमातंगीपरिकीर्तिता । वैकुण्ठवासिनीदेवीकमलाचप्रकीर्तिता ॥
पातालवासिनीदेवीलक्ष्मीरूपाचसुन्दरी एतादशमहाविद्यासिद्धविद्याप्रकीर्तिताः ।
धर्मार्थमोक्षदानित्यंचतुर्वर्गफलप्रदा । येनकेनप्रकारेणकलौपूर्णफलप्रदा। ॥

## दशमहाविद्या ।

क)त्रिपुराश्रीश्चवाग्देवीतारापिभुवनेश्वरी मातंगीसारिकाराज्ञीभेरंडामुखज्वालिका
दशविद्यास्वयंचैताभाषिताःकृत्तिवाससा ।

## उक्तदशमहाविद्याउपासनाफलानि ।

मुक्तिंददातित्रिपुरालक्ष्मीर्भुक्तिंददातिच विद्यांददातिवाग्देवीप्रत्येकंजन्मनिश्चला ।
तारातारयतेसिंधुं ह्यैश्वर्य्यंभुवनेश्वरी । मातंगीराक्षसाशत्रोमतिंहरतिनिश्चशः ।
सारिकासंददात्येवराज्ञीराज्यंप्रयच्छति । भेरंडाचददात्येवसंततींविश्वव्यापिनी ॥
धनंज्वालामुखीदेवीभक्तेभ्यःसंप्रयच्छति दशविद्यायथाह्येताःभक्तेभ्यःफलमिष्टदाः

## दशमहाविद्याभेदाः

### त्रिपुरायाः

त्रिपुराभैरवीविद्याहिंगुलाचण्डिकातथा चामुण्डानारसिंहीचऐन्द्रीशिवतीश्वरी ।
मृडानीवारुणीदुर्गामहात्रिपुरसुन्दरी । विद्याद्वादशभेदास्तुप्रोक्ताश्चेतेत्रिशूलिना ॥

### लक्ष्म्याः

लक्ष्म्याभेदद्वयंदेवंभाषितंकृत्तिवाससा लक्ष्मीश्चरुक्मिणीचेतित्रिभिर्वर्षैःफलंभवेत्

### सरस्वत्याः

वाग्देवीचतथावाणीसरस्वत्यनिलात्मिका एतेभेदाःसरस्वत्याःफलंवर्षचतुष्टयम् ॥

### तारायाः

तारापितारिणीचैवतथाचैकजटास्मृता सरस्वतीनीलपूर्वाचुग्रताराप्रकीर्तिता ।
ताराभेदास्तुपंचैवऽक्षोभ्यायप्रकीर्तिता ।

### भुवनेश्वर्याः

भैरवीभीमरूपाचभीमात्रिभुवनेश्वरी । भक्त्याफलप्रदादेवीनित्यंवर्षचतुष्टया ॥

### मातंग्याः

मातंगीसुमुखीचैवतथामतंगमुनिनास्मृता मातंगीचक्रिणीदेवीकुब्जिकाशांबरीतथा *
उक्ताभेदानिचत्वारिफलंवर्षचतुष्टयम् ॥

### सारिकायाः

सारिकापितथापर्णाफलदात्रीद्विवार्षिके ।

### राज्ञ्याः

राज्ञ्याःभेदद्वयंप्रोक्तंराज्ञीचजननामिनी । द्विवर्षमध्येभक्त्याचराज्ञीराज्यंप्रयच्छति ॥

### भेरुंडायाः

भेरुंडाभेदहीनाचप्रज्ञाभाग्यविवर्द्धिनी ।

### ज्वालामुख्याः

ततोज्वालामुखीचैववह्नीधिकाभगरूपिणी । यथेष्टफलदंप्रोक्तंज्वालाभेदद्वयंशृणु ॥

### षोडशमहाविद्याः

एताद्दशभद्रकालीतुरियाछिन्नमस्तका दक्षिणाकालिकाश्यामाकालरात्रीत्रिसुन्दरी

---

* शाकंभरी ।

## अष्टमातृकाः

(क) ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीपरा वाराहीचतथेन्द्राणीचामुण्डाष्टमयासह

## अष्टभैरवाः

(ख)असिताङ्गोरुरुश्चण्डःक्रोधोन्मत्तसंज्ञकः कपालीभीषणश्चापिसंहाराश्चाष्टभैरवाः

## अष्टगणेशाः

(ग) वक्रतुण्डैकदंतश्चतरपश्चान्महोदरः गजास्यलम्बोदरकोविकटोविघ्नराजकः ।
तद्ग्रेधूम्रवर्णःस्यादेतेऽष्टगणनायकाः ।

## अष्टताराः

(घ)ताराउग्रामहोग्राविवज्राकालीसरस्वतीकामेश्वरीचचामुण्डाह्यष्टौतारिकास्मृता!

## दशदिक्पालाः

छ)इन्द्रःकृशानुःकीनाशोनिर्ऋतिर्वरुणोऽनिलःसोमईशाननामाधोऽनन्तोर्ध्वंचतुर्मुखः

## दशसिद्धपीठानि

(ज) कामरूमुण्डियानंचपूर्णगिरिजालंधरम् वाराणसीचमथुराअयोध्याकाञ्चिकापुरीः
अवन्तिकापुरीमायादशैतेसिद्ध पीठयः ।

## षोडशशक्तयः

झ)मुग्धाश्रीकुरुकुल्लाचत्रिपुरातोतलाक्रियारतिःप्रीतिस्तथावालासुमुखीश्यामलाचला
पिशाचीचविदारीचशीतलावज्रयोगिनी सर्वेश्वरीतिसम्पूज्यमुणीमुद्राम्प्रदर्शयेत्

## द्वात्रिंशच्छक्तः

(ट) किरातीयोगिनीचोरावेतालापक्षिणीपरा ऊर्द्ध्वकेशीचमातंगीमोहनीवर्द्धनी
मालिनीललिताकूतीमनोजापद्मिनीधरा वर्वरीछन्नहस्ताचरक्तनेत्राचिर्चिका
मातृकावंशाचरक्तेश्वरीकृत्तोनरी शांतिदीप्तावज्रहस्ताधूम्राक्षीतासुमङ्गला ॥

## चतुःषष्ठिशक्तयः

(ठ) कुलेशीकुलनन्दाचवागीशाभैरवीतथाउमाश्रीशान्तयाचण्डाधूम्राकालीकरालिनी
महालक्ष्मीश्चकंकालीरुद्रकालीसरस्वती पार्वतीत्रिनेत्राचनकुलीभद्रकालीशशिप्रभा

प्रत्यङ्गिरासिद्धलक्ष्मीरमृतेशीचचण्डिका खेचरीभूचरीसिद्धाकामाक्षीहिंगुलावली
जयाचविजयाचाप्यजितानित्यापराजिता विलासिनीतथाघोराचित्राभुग्धाघनेश्वरी
सोमेश्वरीमहाचण्डाविद्याहंसीविनायका वेदगर्भातथाभीमाउग्रावैद्याचसद्गतिः
उग्रेश्वरीचन्द्रगर्भाज्योत्स्नासत्यायशोवती कुलिकाकामिनीकौम्याज्ञानवत्यथडाकिनी
राकिनीलाकिनीचाथकाकिनीशाकिनीत्यपि हाकिनीतिचतुःषष्ठिशक्तयःसिद्धिदायका

## इति श्रीवास्तव्य कायस्थ कुलावतंस श्री राय लक्ष्मण प्रसादात्मजेन श्री राय ईश्वरी प्रसादेन संग्रहीते गुप्तसारसंग्रहे सप्तमखण्डः ॥

## अष्टम खण्डेतंत्रोपयोगिवस्तुविचारः

### एक लिङ्गबाणलिगेत्यादि

पञ्चक्रोशान्तरेयत्रनलिंगान्तरमीक्षते तदेकलिंगमाख्यातं तत्रसिद्धिरनुत्तमा

### बाण लिङ्गनर्मदलिंगविशेषः

पङ्कजस्यफलाकारं कुण्डलस्यसमाकृति पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृति
मधुवर्णन्तथाशुक्लंनीलम्मरकतप्रभम् भुक्तिमुक्तिप्रदं चैवबाणलिंगमुदाहृतम्
प्रत्यहंयोऽर्चयेल्लिंगनार्मदम्भक्तिभावतः ऐहिकंकिंफलन्तस्यमुक्तिस्तस्यकरेस्थिता

### कुण्डलीविशेषशालिग्रामशिला

वामावर्त्तंभवेद्रेखावस्तुं ललितयायदि कुण्डलीसाचविज्ञेयाशक्तिपूजनमुत्तमम्

### सुदर्शनोपिशालिग्रामविशेषः

दक्षिणेवर्त्तुलंयस्यतत्सुदर्शनमीरितम्

### द्विविधमुद्रा

प्रहेयंमण्डलाकारंचन्द्रबिम्बनिभंशुभम् चारुपद्ममनोहारिशर्कराद्यैःप्रपूरितम्
पूजाकालेदेवतायामुद्रेयंपरिकीर्त्तिता

## त्रिविधमत्स्य निरूपणम्

मत्स्यं तु त्रिविधं प्रोक्तं उत्तम मध्यमाधमा उत्तमन्त्रिविधन्द्वे विशालपाठीनरोहितैः
प्रवीणकण्टकैर्हीनं लक्ष्यं स्वादु युतम् देव्याः प्रीतिकरञ्चैवमध्यमं स्यान्नतुर्विधम्
अस्थ्राणितानि सर्वाणिअधमान्याहुरुत्तमाः

## त्रिविधसुरा

सुरा तु त्रिविधा देवी स्फाटिकी डाकिनी तथा काञ्चिकी तिचदि रा सा सर्वसिद्धिप्रदायनी

## षड्विधसुरानिरूपणम्

माध्वीशान्तिकरीप्रोक्तावश्येचस्फाटिकीशुभा ।
स्तम्भनेडाकिनीज्ञेयाविद्वेषेपैष्टकीमता
उच्चाटनेतथागौड़ीमारणेभैरवीतथा

## एतासांलक्षणम्

माध्वीमधुसमुद्भूतास्फाटिकीकाञ्जिकीमता ।
कद्दजाडाकिनीदेवीपैष्टीचपिष्टसम्भवा ।
गौड़ीगुडसमुद्भूतात्वग्भूताभैरवीमता

## सुराप्रतिनिधिः

गुडार्द्रकरसेनैवसुरातुब्राह्मणस्यच

## त्रिलौहनिरूपणम्

क) सोमसूर्याग्निरूपास्युर्वर्णाः लौहत्रयन्तथारौप्यमिन्दुःस्मृतोहेमसूर्य्यस्ताम्रोहुताशनः
लोहभागास्समुद्दिष्टाःस्वराद्यक्षरसंख्यया पञ्चस्वरास्मृताः सौम्यास्पर्शाशोरोः शुभोदया
आग्नेयाव्यापकाः सर्वेसोमसूर्याग्निदेवतास्वराः षोडशविख्याताः शस्यतेपञ्चविंशति
व्यापकादशतेकामधनधर्मप्रदायिन

(ख) दशभागंसुवर्णस्या त्ताम्रस्यद्वादशम्भवेत् षडंशंरजतस्यापिचैतल्लोहत्रयं शुभम्

## सुव्रतम्

विश्वामित्रेणरचितोविशेषोधातुरुच्यते

## त्रिमुण्डविचारः

(क) कुक्कुटस्पचमुण्डैकंमुण्डंक्रोष्टृवृषस्यच त्रिमुण्डमेतदाख्यातंसाधकानांसुखावहम्
(ख) आसनंचैवगोमुण्डेवामेकुक्कुटमुण्डकम् दक्षिणेचशिवामुण्डंकृत्वापूजांसमाचरेत्

## त्रिमधुविचारः

क्षौद्रक्षीराज्यमिलितस्त्रिमधुपरिकीर्त्तितम्:

### तस्य भागः

पलमेकन्तुक्षौद्रस्यक्षीरस्यापिपलत्रयम् । आज्यंसार्द्धपलंयोज्यम्मधुरत्नितयेशुभे ॥

## त्रिकटु

पिप्पलीमरिचंशुण्ठीत्रयमेतद्विमिश्रितम् त्रिकटूत्र्युषणंव्योषंकटुत्रिकमुदाहृतम्

### तस्य भागः

अनुक्तेषुचभागेषुसमभागम्प्रकल्पयेत्

## पंचामृतम्

पयोदधिघृतंक्षौद्रंशर्कराद्यैरनुक्रमात् । तोयंधूपान्तरैःकृत्वापञ्चामृतविधिंबुधः ॥

### तस्य भागः

शर्करामधुदुग्धंचघृतन्दधिसमंसमम् पञ्चामृतमिदम्प्रोक्तं देहशुद्धौविधीयते

## पंचगव्यम्

( क ) पलमात्रंदुग्धभागं गोमूत्रंतावदिष्यते घृतञ्चपलमात्रंस्याद्गोमयन्तोलकद्वयम्

पलप्रमाणंचदधिपञ्चगव्येनयोजयेत्

गोमयाद्विगुणंमूत्रंमूत्रात्सर्पिश्चतुर्गुणम् दधिपञ्चगुणम्प्रोक्तं क्षीरमष्टगुणन्तथा

## पंचपल्लव निरूपणम्

पनसाम्रन्तथाश्वत्थंवटंबकुलमेवच पञ्चपल्लवमित्युक्तं मुनिभिस्तंत्रवेदिभिः

## पंच तत्वम्

मीनम्मांसंतथामत्स्यम्मुद्रामैथुनमेवच । एतानिपञ्चतत्वानित्वयाप्रोक्तानिशङ्कर ॥

कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं । एतानिपञ्चरत्नानिकलशेनिक्षिपेत्सुधी ॥

## पंच रत्नम्

कनकंरजतंताम्रं त्रिममौक्तिकंतथा एतानिपञ्चरत्नानिकलशेनिक्षिपेत्सुधीः

## अष्टगंधम्

(क) चन्दना गुरु कपूर चोरकुम्कुमरोचना जटामांसीकपियुतंशक्ते गंन्धाष्टकम्त्रिषु।

(ख) चम्दनागुरुह्रीवेरकुष्टकुम्कुमसेव्यका। जटामांसीमुरमितिविष्णोर्गन्धाष्टकंस्मृतम्

(ग) चन्दनागुरुकर्पूरतमालजलकुम्कुमम् काश्मीरंकुष्टसंयुक्तं शैवंगन्धाष्टकंस्मृतम्।

(घ) कचूंरागुरुकर्पूररोचनारक्तचन्दनम् कुम्कुमंचन्दनम्चापिकस्तुरीत्यष्टगन्धकम्।

## तेषांभागानि

कर्पूरकपिचोराणिसमभागानिकल्पयेत् चतुर्भागाजटामांसीतावतीरोचनामता
कुम्कुमंसप्तभागंस्यात्द्विभागंचन्दनम्मतम् अगरुर्नवभागंस्यादितिभागक्रमेणच

## अष्टविषनिरूपणम्

( क ) गृहधूमचिताङ्गारौमोरणेष्टविषाणिच श्येनाग्निलौनपिंडानिधत्तूरकरसंततः
एतद्रव्यंत्रिकटूकंविषाष्टकमुदाहृतम्

(ख) पिप्पलीमरिचंशुण्ठीश्येनविष्ठाचचित्रकः गृहधूमोन्मत्तरसोलवणंचविषाष्टकम्

## अष्टधातुनिरूपणम्

(क) हिरण्यंरजतंकांस्यंताम्रसीसकमेवच रंगमायासदैत्यंचधातवोष्टौप्रकीर्त्तिताः

(ख) सुवर्णरजतंताम्रंलोहंकुप्पंचपारदम् रंगंचसीसकंचैवअष्टौदेवसुसम्भवा।

## तेषांभागाः

माषमात्रंसुवर्णंतुरजतंपलचतुष्टयं माषषट्कमितंलोहंसीसकंपुनरेवहि
सेटकस्याष्टभागंदेयंखलुविचक्षणैः। सेटकस्यसार्द्धपादंरंगंताम्रसार्द्धंसेटकं
दैत्यम्पलमितंदद्यात्परामोषम्पारदम्तथा

## अष्टद्रव्याणि

अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधिस्तिलाः सिद्धार्थपायसाज्यानिद्रव्यान्यष्टौविदुर्बुधाः

## अष्टविधप्रतिमानिरूपणम्

शलीदारुमयोलौहीलेप्यालेख्याचसैकती मनोमयीमणिमयीप्रतिमाष्टविधास्मृताः

## अष्टमहामांसानि

मांसंतुत्रिविधंप्रोक्तंजलभूचरखेचरम् गोधाचैवाश्वमहिषवराहाजमृगोद्भवम्
महामांसाष्टकम्प्रोक्तंदेवताप्रीतिकारणम्।

## तस्यप्रतिनिधिः

लवणार्द्रकपिन्याक गोधूममांसपंचमम् लशूनंचमहादेवि मांसप्रतिनिधौस्मृतम् ।

## नवरत्नम्

मुक्तामाणिक्यवैदूर्य्यगोमेदावज्रविद्रुमैः पद्मरागंमरकतंनीलंचेतियथाक्रमात्

## मधुपर्कनिरूपणम्

दधि सर्पिर्जलंक्षौद्रं सितै ताभिश्चपञ्चभिः प्रोच्यते मधुपर्कस्तुसर्वदेवौघतुष्टये

## तस्यभागः

जलंतुसर्वदास्वल्पंसितोदधिघृतंसमम् सर्वेषामधिकंक्षौद्रं मधुपर्कंप्रयोजयेत्

## षडङ्गधूपनिरूपणम्

सिताज्यमधुसम्मिश्रंगुग्गुलूगुरुचन्दनम् षड़ंगधूपयेत्सतुसर्वदेवप्रियंसदा

## तस्यभागः

भागाऽनुक्ते समम्भागंकल्पयेत्स।धकोत्तमः

## शत्रनिरूपणम्

समरेशत्रुनिहितंपञ्चापणमासिकंशिशुम् विद्यांस्तंसाधयेच्छीत्रं साधितैचंप्रसिध्यति

## धारणयन्त्राणि

## धारणयंत्रलेखनद्रव्याणि

(क) काश्मीररोचनालाक्षामृगेभमदचन्दनैः विलिखेद्धेमलेखन्यायंत्राणिसकलान्यपि

## यंत्राधारनिरूपणम्

(ख) सौवर्णेराजतेपात्रेभूर्जेवासम्यगालिखेत् अथवाताम्रपट्टेवागुटिकांकृत्वधारयेत्

## क्रमशस्तेषांफलम्

(ग) यावज्जीवन्तुसौवर्णेरौप्येविंशतिवार्षिकम् भूर्ज्जेद्वादशवर्षाणितदर्द्धंताम्रपत्रके

## कदायंत्राणामशुद्धिः

(घ) भूमिस्पृष्टं शत्रस्पृष्टं यंत्रनिर्माल्यसङ्गतम् विशीर्णंलंघितम्मंत्रीयंत्रंनैवचधारयेत्

## हविष्यान्नम्

हेमन्तिकंसितास्विन्यंधान्यमुद्गास्तिलायवाःकलापकङ्गनीवाराःवास्तुकंहिलमोचिका
षष्ठिकाकालशाकंचमूलकंकेमुकेतरम् । कन्दंसैन्धवसामुद्रेगव्ये चदधिसर्पिषो ॥
पयोऽनुधृतसारंचपनसाम्रौहरीतकी । तिन्तडोजोवकंचैवनागरङ्गं चैवपिप्पली ॥
कदलोलवलीधात्रोफलान्यगुडमैक्षवम् । अतैलपक्वं मुनयोहविष्यान्नंप्रचक्षते ॥

## परमान्नम्

परमान्नम्पायसम्प्रोक्तम्विहितंयज्ञकर्म्मसु

### इति खरे श्री वास्तव्य कायस्थ कुलावतंस श्री राय लक्ष्मण प्रसादात्मजेन श्री राय ईश्वरीप्रसादेन संगृहीते गुप्तसारसंग्रहेऽष्टमखण्डः समाप्तः

—— * ——

# नवमखण्डे षट्प्रयोगप्रकरणम् ।

## षटप्रयोगनामानि

कर्म्माणिषड्वोवक्ष्येसिद्धिदानिप्रयोगतः । शान्तिर्वश्यंस्तम्भनंचद्वेषमुच्चाटमारणे

## षट्कर्म्मण्यावश्यकताकेति

देवतादेयतावर्णाऋतुदिग्दिवसासनम् विन्यासमण्डलंमुद्राक्षरंभूतोदयःसमित् ।
मालाग्निलेखनंद्रव्यं कुण्डस्रुकस्रुवलेखनी षट्कर्म्माणिप्रयुञ्जीतज्ञात्वैतानियथाक्रमम्

## ऋतुनिर्णयः

ऋतुषट्कंवसन्ताद्यमहोरात्रम्भवेत्क्रमात् एकैकस्यऋतोर्म्मानंघटिकोदशकंमतम्

## भूतवर्णनिरूपणम्

स्वराष्टौचंद्रवर्णाश्चभूतवर्णाउदीरिताः चन्द्राणांहीनास्तेग्राह्यावशीकृत्यादिकर्म्माणि
केचित्सवलहान्यं परमाहुश्चन्द्रादिवर्णकान्शान्त्यादिकर्मासुज्ञेयाजातयःषडनुक्रमात्

## आत्मरक्षावश्यकत्वम्

षट्कर्मणां विधिः प्रोक्त एवं मंत्रज्ञ तुष्टये सम्यक् कृत्वान्यासजालमात्मरक्षां विधाय च ।

## षट्प्रयोगविषये प्राणस्थापनम् प्राणाकर्षणञ्च

पाशांकुशपुटा शक्तिर्वालो विंदु विभूषितः यांद्याः सप्त सकारांता व्योमसद्यें दुसंयुतं
तदंते हंसमंत्रः स्यात्ततो मुष्य पदं वदेत् । प्राणा इति वदेत्पश्चादिह प्राणास्ततः परं ॥
अमुष्य जीव इह स्थितस्ततो मुष्य पदं वदेत् सर्वेन्द्रियाण्यमुष्याते वाङ्मनश्चक्षुरः तत ।
श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरं । तिष्ठंत्वग्निवधूरंते प्राणमंत्रोयमीरितः ॥
प्रत्यमुष्यपदं पूर्वं पाशादौ तिप्रयोजयेत् । प्रयोगेषु समाख्यातः प्राणमंत्रो मनीषिभिः ॥
ब्रह्मविष्णुशिवाः प्रोक्ता मुनयस्तत्त्ववेदिभिः उक्तमृग्यजुषां साम च्छंदश्छंदो विशारदैः
चैतन्यरूपा प्राणात्मा देवता शक्तिरीरिता । कवर्णं विद्यत्पूर्वभूतेहृदयमीरितं ॥
शिरश्चवर्गशब्दाद्यैरीरितं तदनंतरं । ज्ञानेन्द्रियेष्टवर्गाद्यैस्तच्छिखापरिकीर्तिता ॥
कर्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्तितम् वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम् ॥
बुध्याद्यैर्यादिसंयुक्तैरस्त्रमस्य समीरितं आत्मनैतासमाख्याता अंगमंत्राः सजातिभिः
नाभेश्चरणपर्यंतं पाशबीजं प्रविन्यसेत् । हृदयान्नाभिपर्यंतं शक्तिबीजं ततः परं ॥
मूर्द्धादि हृदयं यावदंकुशं विन्यसेत्ततः । हृदयेधातुषु न्यस्येद्यादीन्सप्त यथाक्रमं ॥
प्राणे जीवे ततो न्यस्येद्धंसवर्णद्वयं पृथक् । कुर्याद्व्यापकमेतेन समस्तेन विधानवित्

ततो विचिंतयेद्देवीं जगत्प्रभूतां जगन्मयीं
रक्ताब्धिपोतारुणमध्यसंस्थां पाशांकुशाविक्षुशरासबाणान् ॥
शूलं कपालं दधतीं कराग्रैरक्तां त्रिनेत्रां प्रणमामि देवीं
एवं ध्यात्वा जगद्धात्रीं लक्षमेनं जपेन्मनुं

जुहुयात्तद्दशांशं न चरुभिर्घृतसंयुतैः । षट्कोणाढ्ये शक्तिपीठे विधिनानेन पूजयेत् ।
प्रार्चयेत् षट्सु कोणेषु ब्रह्माणं विष्णुमीश्वरं वाणीं लक्ष्मीमिमां पश्चात्षडंगानि प्रपूजयेत् ।
दलेषु मातरः पूज्यास्तद्बाह्ये लोकपालकान् एवं संपूजयेद्देवीं सुगंधिकुसुमादिभिः ॥
[ इति संसाधितो मंत्रः षट्कर्मफलदो भवेत्

## प्राणाकर्षणम्

स्थापयेन्मनुनानेन प्राणान्नत्वं त्रदेशिकः पोजान्तेनुक्रशब्दनामादौ दूतीः प्रयोजयेत्
मृतावैत्रस्य ताभूयोजीवहाप्राणहाततः आकृष्याकर्षनी पश्चात्प्रमर्दा रस्फुलिङ्गिनो ।
ध्वंसगतिहरीत्येताः प्राणदूत्योनवस्मृताः पाशेन बद्धचेष्टस्य शक्तया स्वीकृतचेतसः ।

अंकुशेनाहृतस्याभिःसाध्यस्यासून्समाहरेत्द्वादशांगुलमानेनकृत्वासाध्यस्यपुत्तलीम्
तस्यांप्राणात्मकंयंत्रंसकोटंहृदयेन्यसेत् निशीथसमयेसाध्येसुप्तेतस्यहृदम्बुजे ।
दलेषुवायुवन्हीन्द्रवरुणानामतःपरम् ईशराक्षसशीतांशुयमानांकर्णिकान्तरे ।
यादोन्तंसस्मायुक्तान्ठंगाकारानुस्मरन् शिरोविन्दुसमुद्भूतितन्तुसम्बद्धविग्रहान्
एवमात्महृदम्भोजेभृंगोरूपान्धियःस्मरेत् आत्महृत्पद्मगंभृंगोप्रस्थाप्यश्वासवर्त्मना
एकैकसाध्यहृत्पद्मात्भृंगमेकैकमानयेत् पुत्तल्यांस्थापयेन्मंत्रीस्वचित्तेवाविधानवित्
शत्रुछेदेप्रकुर्वीतवन्हित्रीजेनसर्वतः आकृष्टान्साध्यहृद्भृंगान्वासंस्तम्भयेत्ततः ।
एवमेकादशावृत्तिंकुर्यात्सर्वेषुकर्मसु । वश्याकर्षणयोर्यादीनरुणान्संस्मरेत्सुधीः
मोहविद्वेषयोर्धूम्रान्कृष्णान्मारणकर्म्मणि पीतांस्तम्भनेध्यायेत्प्राणाकर्षणकर्म्मणि

## प्राणस्थापनम्

आकृष्टान्साध्यहृत्प्राणान्स्थापयेदात्मनोहृदि क्रूरकर्म्मसुपुत्तल्यांतेषांस्थापनमीरितम्
प्राणान्साध्यस्यमण्डूकानात्मनस्तुभुजङ्गमान् संस्मरेत्तत्रनिपुणःसदाक्रूरेषुकर्म्मसु ।
वाय्वग्निशक्रवरुणेश्वरराक्षसेन्दुप्रेतेश पत्रलिखितैरथयादिवर्णान्
विन्द्वन्तिकैःश्वगतहंससमेतसाध्यंप्राणात्म यंत्रमथवर्णवृतंधरास्थम् ॥

शान्ति प्रकरणम् ।

## काशान्तिः

रोगकृत्याग्रहादीनांनिराशःशान्तिरीरिता ।

## शान्तिकर्म्मणिदेवतादिनिरूपणम्

शान्तिकर्म्मणिसर्वत्ररतिःस्याद्देवतोत्तमा पुष्पंयोज्यन्तुश्वेताभंऋतुर्हेमन्तकस्तथा
रजनीशेषप्रहरेईशानेसाधयेत्सुधीः

## शान्तिकर्म्मारम्भपक्षतिथिनिरूपणम्

शुक्लपक्षेद्वितीयाचसप्तमीपंचमीतथा तृतीयाबुधजीवाभ्यांयुताशान्तिविधौमता ।

## आसनम्

पद्मासनंसमाख्यातंशान्ति कर्म्मणिसाधकैः

## पद्मासनंयथा

ऊर्वोरुपरिसंस्थाप्ये उभयेपादतलेतथा पद्मासनम्भवेदेतत्सर्वपापप्रणाशनम् ।

## आसनम्

गोचर्म्मनिर्म्मितम्भद्रमासनंसमुदाहृतम् ।

## * विन्यासोऽर्थान्नामयोजनाकेनरूपेणग्रन्थनम्

* एकोमंत्रस्यवर्णःस्यात्ततोनामाक्षरम्पुनः मंत्रार्णोनामवर्णश्चेत्येवंग्रंथनमीरितम्

## मण्डलम्

अर्द्धचन्द्रनिभंपार्श्वद्वयेपद्मद्वयांकितम् जलस्यमण्डलम्प्रोक्तं प्रशस्तंशान्तिकर्म्मणि ।

## पद्ममुद्रा

शान्तिकर्म्मणिसर्वत्रमुद्रापद्मेरितातथा

## सायथा

करौद्वौसम्मुखौकृत्वासंहताबुन्नतौपुनः अंगुलीःप्रसृतामध्येऽङ्गुष्ठौपद्मस्यमुद्रिका

## होमेमृगीमुद्रा

होमेतुमृगीम्मुद्रांकुर्यात्साधकसत्तमः मध्यमानामिकाङ्गुष्ठयोगेमुद्रामृगीमता ।

## पल्लवयोजनप्रकारः

वर्णश्चन्द्रइतिख्यातोनमःपल्लवयोजनम्

## श्वासविचारः

नासापुटद्वयाद्वस्ताद्यदाप्राणागतिर्भवेत् तोयोदयस्तथाज्ञेयःशान्तिकर्म्मणिसिद्धिदः

## शान्तौहोमपदार्थविवेकः

दुर्वायाःसमिधःशान्तौगोघृतेनसमन्विताः

## माला

शङ्खमालाजपेकार्य्याशान्तिकर्म्मणिशोभने

## जपप्रकारः

मध्यमायांस्थितामालांज्येष्ठेनावर्त्तयेत्सुधीः शान्तौवश्येतथापुष्टौभोगमोक्षार्थकेजपे

## मालायांदानासंख्या

शतामष्टोत्तरंकृत्वाचतुःपंचाशतापिवा सप्तविंशतिभिर्म्मालाकार्य्यासर्वंतकर्म्मणि

---

* ग्रंथनम् मंत्रनामवर्णलेखनेऽन्यतरस्मात्पुर्नलेखनम्

## अग्निः

लौकिकाग्नौ विशेषेण साधयेत्साधकोत्तमः

## समिधानिरूपणम्

शुभे कर्म्मणि बिल्वार्कपलाशक्षीरवृक्षजैः

## अग्निजिह्वा

सुप्रभातु समाख्याता वश्ये जिह्वा विशेषतः

## ब्राह्मणभोजनसंख्या

शान्तौ वश्ये भोजयेत्तु होमाद्विप्रान्दशांशतः उत्तमन्तद्भवेत् कर्म्मतत्वांशेनतु मध्यमम्

होमाच्छतांशतो विप्रभोजनन्त्वधमन्तु तत्

## शान्तौ विशेषनियमाः

भूर्ज्जपत्रे लिखेद्यन्त्रं चन्दनेन सुशोभनम् शलाकया सुवर्णस्य रजतस्यापि वा पुनः

तथा पश्चिमदिग्भागे वृत्तं कुण्डं मनोहरम् । स्रुक्स्रुवौ चसुवर्णस्य यज्ञवृक्षोद्भवावपि

भोजनं च हविष्यान्नं हरिद्राक्तजलेन तु तर्पयेत्स्वर्णपात्रे च मृदासनसमाश्रितः

नियमान्येतानि शस्तानि शान्तिकर्म्मणि शोभने

वश्य प्रकरणम्

## वश्यम्

वश्यं जनानां सर्वेषां विधेयत्वमुदीरितम्

## वश्ये देवतादि निरूपणम्

वाणीदेवी समाख्याता वश्ये पुष्पं तु रक्तकम् वसन्तश्च ऋतुर्न्हेयाभिं प्रथमं वच

उत्तराभिमुखो भूत्वा वश्यं सर्वत्र साधयेत्

## वश्यारम्भे तिथिः

चतुर्थी नवमी षष्ठी त्रयोदशी तिथिस्तथा जीवसोमयुताशस्ता वशीकरणकर्म्मणि

## स्वस्तिकासनं

आसनं स्वस्तिकं दद्यैनान्यमासनमाचरेत्

## तल्लक्षणम्

जानूर्वोरन्तरे सम्यक् कृत्वा पादतले शुभे ऋजुकायो विशेद्योगी स्वस्तिकन्तत्प्रचक्षते

## आसनम्

खड्गचर्म्मकृतम्वश्ये आसनं समुदाहृतम्

## विन्यासोऽर्थान्नामयोजनाकेनप्रकारेण

## विदर्भकल्पना

आदौ मन्त्राक्षरं द्वन्द्वमेकं नामाक्षरन्ततः एवं पुनः पुनः प्रोक्तो विदर्भो मंत्रचित्तमैः । १

## मण्डलम्

त्रिकोणं स्वस्तिकोपेतं वश्ये वह्नेस्तु मण्डलम्

## मुद्रा

पाशमुद्रा समाख्याता वश्ये नान्या कदाचन

## पाशमुद्रा यथा

तर्जनीमध्यमे वामे ऊर्ध्वमुख्यौ विधाय च दक्षिणे द्वे अधोमुख्यौ सम्मुख्यौ च परस्परम्

पाशमुद्रा भवेदेषा मिथः सम्पीडने तयोः

## वश्ये होममुद्रा

होममुद्रा पुनर्वश्ये हंसी ति प्रकीर्त्तिता हंसीकनिष्ठाहीनानां सर्वासां योजने मता ।

## वर्णपल्लवयोर्विवेकः

वर्णं जलमलयं ज्ञेयं स्वाहा तु पल्लवो भवेत्

## स्वरविचारः

पुरोपरिष्टाद्गमने प्राणे स्यात्पावकोदयः तदा कर्म्मद्वये सिद्धिर्मारणे च वशीकृतौ

## होमवस्तुविवेकः

दाडिमप्रशवो होमे वश्येऽजाघृतसंयुतः

---

विदर्भः । मंत्र नामवर्ण लेखनेऽन्यतर समाप्तेपुनर्लेखनम् १

मालातुपद्मबीजस्यवश्येकार्य्याप्रयत्नत।

## जपप्रकारः

मध्यमायांस्थितांमालांज्येष्ठेनावर्त्तयेत्सुधीःशान्तौवश्येतथापुष्टौभोगमोक्षार्थकेजपे

## मालायंदानासंख्या

शान्तिप्रकरणवदेवोहनोयो

## अग्निः

लौकिकाग्नौतुजुहुयाद्वश्येसाधकसत्तमः

## समिधाविचारः

शुभेकर्म्मणिविल्वार्कपलाशक्षीरवृक्षजैः।

## अग्निजिह्वा

अग्निजिह्वासमाख्यातारक्ताभावश्यकर्म्मणि

## ब्राह्मणभोजनसंख्या

शान्तिप्रकरणवदेवचिन्तनीया

## विशेषनियमाः

गोरोचनयालिखेद्यन्त्रंभूर्जपत्रेविशेषतः दुर्वांकुरेणलिखेद्वश्येसर्वत्रसाधकः ।
पद्माकारम्भवेत्कुण्डमुत्तरेचसुशोभनम् स्रुक्स्रुवौतुसुवर्णस्ययज्ञवृक्षोद्भवावपि ।
भोजनन्तुहविष्यान्नंहरिद्राक्तजलेनतु तर्पयेत्स्वर्णपात्रेचमृदासनसमाश्रितः
नियमान्येतानिचपुनर्वशीकरणकर्म्मणि ।

# स्तम्भनप्रकरणम्

## स्तम्भनम्

प्रवृत्तिरोधःसर्वेषांस्तम्भनंसमुदाहृतम्

## स्तम्भनेदेवतादिनिरूपणम्

देवतातुरमाशस्तापुष्पम्पीतम्प्रकल्पयेत् रजनीप्रथमेयामेऋतुश्चशिशिरस्तथा ।
याम्याभिमुखोभूत्वाप्रयोगंसाधयेत्सुधीः

## स्तम्भनेतिथिविचारः

भूताष्टम्यांकृष्णगतेअमावास्यातदन्तगा भानुमन्दकुजोपेतास्तम्भमारणयोःशुभा ।

## विकटासनन् तल्लक्षणंच

विकटासनंसमस्थस्तम्भनंसाधयेत्सुधीः जानुजंघान्तरालेतुभुजयुग्मंप्रकल्पयेत्

## आसनम्

गजचर्मकृतम्भद्रमासनंस्तम्भनेमतम् ।

## विन्यासोऽर्थात्ग्रामयोजनाकेनप्रकारेण

## सम्पुटप्रकारः

मंत्रमादौसमुच्चार्यततोनामाखिलम्पठेत् । 'अन्तेव्युत्क्रमतोमंत्रमेषसम्पुटईरितः

## मण्डलम्

चतुरस्रतम्वज्रमुक्तैरू म्भेभूमेस्तुमण्डलम् ।

## मुद्रा

गदामुद्राप्रकथितास्तम्भनेतत्वदर्शिभिः ।

## गदामुद्रायथा

अन्योऽन्याभिमुखौकृत्वाहस्तौतुग्रथितावुभौ अङ्गुष्ठौमध्यमेतद्वत्संयुक्ते सुप्रसारिते
गदामुद्रेयमुदितादर्शितावित्रहारिणी ।

## होममुद्रा

होमेतुशूकरीमुद्राकार्यासाधकसत्तमैः ।

## वर्णपल्लवयोर्विचारः

वर्णंपृथिव्याःसंज्ञेयम्वषट्कारस्तुपल्लवः ।

## स्वरविचारः

नासादण्डाश्रितगतौप्राणेस्तम्भेधरोदयः ।

## होमवस्तुविवेकः

मेषीघृताक्ताःसमिधःस्तम्भेराजतरूद्भवाः ।

## माला

निम्बवीजेनरचितामालाकार्याप्रयत्नतः

## जपप्रकारः

अनामांगुष्ठयोगेनस्तम्भनार्थेजपेत्सुधीः ।

## मालायांदानासंख्या

बीजैःपंचदशभिर्मालातुस्तम्भनेमता ।

## अग्निः

वरकाष्ठद्वयसंघर्षाऽग्निमुत्पादयेत्सुधीः ।

## समिधाविचारः

अशुभेत्रिपवृक्षाक्षैर्निम्बधत्तूरशैलुजैः ।

## अग्निजिह्वा

वह्निजिह्वाभवेच्छुद्धाकनकाभास्तम्भनेतथा ।

## ब्राह्मणभोजनसंख्या

शान्तेद्विगुणितस्त्विप्रभोजनंस्तम्भमेमतम् ।

## स्तम्भनेविशेषनियमाः

द्वीपत्वचायाम्विलिखेद्धरिद्रायाःरसेनतु लेखनीमुनिकाष्ठस्यराजवृक्षस्य वा भवेत् । चतुरस्त्रम्भवेत्कुण्डंपूर्वस्यान्दिशिसाधयेत् लौहेननिर्मितौस्यातांस्त्रुक्स्त्रुवौस्तम्भनेतथा भोजनंतुहविष्यान्नम्मरीचाक्तेनवारिणा तर्पयेन्मृण्मयेपात्रेउपविश्योत्थितजानूनि नियमान्येतानिचतथाभवेयुःस्तम्भनेपुनः ।

# विद्वेषणप्रकरणम्

## विद्वेषणार्थविचारः

स्निग्धानान्द्वेषजननंमिथोविद्वेषणम्मतम्

## विद्वेषणेदेवतादीनांनिरूपणम्

देवतातुभवेज्ज्येष्ठापुष्पंतुवर्णमिश्रितम् ऋतुर्ग्रीष्मोर्द्धदिनेनैऋत्यांतुसमारभेत् ।

## विद्वेषणारम्भतिथिः

एकादशीचदशमीनवमीचाष्टमीयुता । शनैश्चरसितावेतामोक्ताविद्वेषकर्मणि ।

## कुक्कुटासनन्तल्लक्षणंच

कुक्कुटासनमाश्रित्यप्रयोगंसाधयेत्सुधीः । कृत्वोत्कटासनम्पूर्वंसमपादद्वयन्ततः ।
अन्तर्जानुकरद्वन्द्वं कुक्कुटासनमीरितम् ।

## आसनम्

शृगालचर्म्मणिस्थित्वाकुर्याच्छिद्वेषणंजन ।

## विन्यासोऽर्थान्नामयोजनाकेनरूपेण

## रोधनप्रकारः

आदिमध्यावसानेषुनाम्नोमंत्रस्तुरोधनम्

## मंडलस्यमुद्रायाश्चविचारः

मण्डलंतुभवेद्वृत्तम्मुद्रामुशलमेवच ।

## होमेमुद्रातल्लक्षणंच

होमेतुशूकरीमुद्राकुर्यात्साधकसत्तमः शूकरीकरसंकोचेमुद्रालक्षणमीरितम् ।

## वर्णपल्लवयोर्विवेकः

आकाशस्यतुवर्णंहंचौषट्चपल्लवोभवेत् ।

## स्वरविचारः

पुटमध्येगतेप्राणेद्वेषेव्वीमोदयःशुभः

## समिधविचारः

धत्तूरसमिधोद्वेषेऽतसीतैलसंयुताः

## माला

अरिष्टस्यफलैर्नैवमालाविद्वेषकर्म्मणि

## जपप्रकारः

तर्जन्यंगुष्ठयोगेनद्वेषोच्चाटनयोःपुनः

## मालायांदानासंख्या

फलैश्चपंचदशभिर्मालाकार्याप्रयत्नतः

## अग्निः

विभीतकस्य काष्ठैर्द्वौ घर्षयित्वा पुनः सुधीः वह्निमुत्पादयेन्मन्त्री रिपोर्विद्वेषकर्म्मणि ।

## समिधाविवेकः

अशुभे विषवृक्षाक्षैर्निम्बधत्तूरशैलुजैः

## अग्निजिह्वा

श्यामानामा च वह्निजिह्वा भवेद्विद्वेषकर्म्मणि

## ब्राह्मणभोजनसंख्या

शान्तेद्विगुणितद्विप्रभोजनं द्वेषणस्मृतम्

## विद्वेषणे विशेषनियमाः

खरचर्म्मणि लिखेद्यन्त्रं गृहधूमेन यत्नतः । लेखनी तु करञ्जस्य प्रोक्ता विद्वेषणे तथा ।
कुण्डं त्रिकोणं नैरृत्यां कुर्यात्साधकसत्तमः लौहेन निर्मितैः स्यातां स्रुक्स्रुवौ द्वेषकर्म्मणि
भोजनं माषमुद्गान्नं मेषरक्ताञ्चितेन च जलेन तर्पयेत्पात्रे खदिरस्य सुनिर्मिते ।
एकपादे स्थितो मन्त्री तर्पयेद्धुयत्नतः । नियमान्येतानि चप्रुनर्विद्वेषे संस्थितानि वै ।

## उच्चाटन प्रकरणम्

## उच्चाटनम्

उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्

## देवपुष्पयोर्विचारः

दुर्गा तु देवता प्रोक्ता पुष्पं श्यामं प्रकल्पयेत्

## ऋतुनिर्णयः

तृतीययामे दिवसस्य ग्रीष्मो ऋतुः स्मृतः ।

## दिग्विचारः

वायव्यकोणाभिमुखमुपविश्योच्चाटयेद्रिपून् ।

## उच्चाटने तिथिविवेकः

कृष्णे चतुर्दश्यष्टम्यां भौमे तु शनौ तु शुक्रे शर्द्रि । उच्चाटनाख्यं कर्म्मात्र कृतं शं करोत्यदये ।

## वज्रासनम् तल्लक्षणंच

वज्रासनंच कथितंसमुच्चाटनकर्म्मणि ऊर्ध्वपादौ क्रमान्न्यस्येज्जान्वोः प्रत्यङ्मुखाङ्गुलो करौनिदध्यादाख्यातंवज्रासनमनुत्तमम्

## आसनम्

मेषचर्म्मकृतम्भद्रमासनम्परिकीर्त्तितम्

विन्यासोऽर्थान्नामयोजनोकेनरूपेण

## योगः

नामान्तेचमनुर्योगोभवेदुच्चाटनेतथा

## मण्डलम्

बिन्दुषट्काङ्कितंवायुमण्डलमुच्चाटनेशुभम्

## मुद्रातल्लक्षणंच

मुद्रांकुलिशनामाख्यांकुर्यात्साधकसत्तमः कनिष्ठाङ्गुष्ठयुङ्मुद्रात्रिकोणात्पशनेमंते

## होममुद्रातल्लक्षणंच

होमेतुशूकरीमुद्राभवेदुच्चाटनेतथा । शूकरीकरसङ्कोचेमुद्रालक्षणमीरितम् ।

## वर्णपल्लवयोर्विचारः

समीरणस्यवर्णस्यरूंकारःपल्लवोभवेत्

## स्वरविचारः

प्राणेतोयंगतेज्ञेयउच्चाटेमारुतोदयः

## होमवस्तुविचारः

चतत्राःकटुतैलाक्ताउच्चाटनविधौमताः

## माला

नरदन्तकृतामालाऽश्वदन्तोद्भवापिवा

## जपप्रकारः

तर्जन्यङ्गुष्ठयोगेनद्वेषोच्चाटनयोःपुनः

## मालायांदानासंख्या

दन्तैश्चपंचदशभिर्म्मालोच्चाटनकर्म्मणि

## अग्नि:

चिताग्नौजुहयान्मंत्रोच्चाटनविधौपुन:

## समिद्विचार:

अशुभेविषवृक्षाक्षेनिंम्बधत्तूरशैलुजै:

## अग्निजिह्वा

रक्ताभावन्हिजिह्वातूच्चाटनविधौमता

## ब्राह्मणभोजनसंख्या

शान्तेद्विगुणितम्विप्रभोजनोच्चाटनेमतम्

## उच्चाटनेविशेषनियमा:

ध्वजावस्त्रेलिखेद्यंत्रमुच्चाटनविधौतथा। विभीतकस्यलेखन्याचिताभस्मेनसाधक:

कुर्य्यात्षट्कोणकंकुण्डम्वायव्यान्दिशिसाधक:। लौहेननिर्म्मितोस्यातांस्रुक्स्रुवा [ वुसमावुभौ।

गोधूमात्रभवेद्भक्ष्यंमेषरक्तान्वितेनच। एकपदस्थितोमंत्रोलौहपात्रेप्रतर्पयेत्।

उच्चाटनेतथैतानिनियमानिस्थितानिवै

# मारण प्रकरणम्।

## मारणम्

मारणंतुप्रकुर्वीतत्रःह्मणेतरचछिपाम्। तच्छुध्यर्थंजपेन्मूलम्मंत्रमष्टोत्तरंशतम्।

प्राणिनाम्प्राणहरणंमारणंसमुदाहृतम्

## मारणे दोषाभावः

पापिष्ठान्नास्तिकांश्चैव देवताकौलनिन्दकान् । अज्ञांश्च घातकान्सर्वान्क्लेशकर्मसु [ संस्थितान् ।
क्षेत्रवृत्तिधनस्त्रीणां आहर्तारं कुलान्तकम् निन्दकं समयानाञ्च पिशुनं राजघातकम्
विषाग्निक्रूरशस्त्राद्यैर्हिंसकं प्राणिनां मुदा योजयेन्मारणे कर्मण्येतान्न पातकी भवेत्

## मारणे दोषः

ब्राह्मणं धार्मिकं कौलं वनितां भूपतिं स्वयम् बालकं नैष्ठिकं नित्यमभिचारे न योजयेत्
योजयेद्यदि वैरेण प्रत्यासत्तिर्निहन्ति तान्

## मारणे ग्रहविचारावश्यकत्वम्

ग्रहाणां स्थितिं च संवीक्ष्य कुर्य्यान्मारणमात्मवान् अनवेक्ष्य कृतं कर्म आत्मानं हन्ति तत्क्षणात्

## देवपुष्पयोर्विवेकः

कालीतु देवता प्रोक्ता पुष्पं दद्याच्च पिङ्गलम्

## ऋतुविचारः

शरदृतुः स्याद्रात्र्यर्धं तत्र मारणमाचरेत्

## दिङ्निरूपणम्

आग्नेयाभिमुखो भूत्वा प्रयोगं साधयेत्सुधीः

## तिथिविचारः

भूताष्टम्योः कृष्णगते अमावास्यातदन्तगा भानुमन्दकुजोपेताः स्तम्भमारणयोः शुभाः ।

## भद्रासनन्तल्लक्षणंच

भद्रासनं समभ्यस्य मारयेदचिरादरीन् सीवन्याः पार्श्वयोर्न्यस्येद् गुल्फयुग्मं सुनिश्चलम्
वृषणाधः पादपार्ष्णी पाणिभ्यां परिबंधयेत् भद्रासनं समुद्दिष्टं योगिभिः पूजितं परम्

## आसनम्

आसनं कारयेद्विद्वान्महिषस्य च चर्मणा ।
न्यग्रासोऽर्थान्नामयोऽन्नाकं नरूपेण ।

## पल्लवः

प्रकुर्वीतप्रयत्नेनमंत्रान्तेनामपल्लवम्

## वन्हिमण्डलम्

त्रिकोणंस्वस्तिकोपेतंमारणेवन्हिमण्डलम्

## खड्गमुद्रातल्लक्षणंच

खड्गमुद्रासमाख्यातामारणेक्रूरकर्म्मणि ऊर्ध्वस्यवामहस्तस्यतर्जन्याद्यंगुलित्रयम्
खड्गमुद्रेयमुदितासर्वशत्रुनिकृन्तनी

## होममुद्रातल्लक्षणंच

होमेतुशूकरीमुद्राकरसङ्कोचेचसाभवेत्

## वर्णपल्लवयोर्विचरः

वर्णंवह्नेस्तुरंज्ञेयंफट्कारःपल्लवोभवेत्

## स्वरविचारः

पद्मोपरिष्ठाद्गमनेप्राणेस्यात्पावकोदयः। तदाकर्म्मद्वयेसिद्धिर्म्मारणेचवशीकृतौ।

## होमवस्तु विचारः

कटुतैलंयुताशस्तामारणेखदिरोद्भवाः।

## माला

मालाचखरदन्तस्यकार्यामारणकर्म्मणि।

## जपप्रकारः

कनिष्ठाङ्गुष्ठसंयोगान्मारणेप्रजपेत्सुधीः।

## मालायांदानासंख्या

दन्तैश्चपंचदशभिर्मालातुमारणेमता।

## अग्निः।

चिताग्नौजुहुयान्मंत्रीमारणेसाधकोत्तमः

## समिधाविचारः

अशुभेविषवृक्षाक्षैर्निम्बधत्तूरशैलजैः

## अग्निजिह्वा

कृष्णाख्यावन्हिजिह्वातुशस्तामारणकर्म्मणि

## ब्राह्मणभोजनसंख्या

होमसंख्यासमम्विप्रभोजनम्मारणेमतम्

## मारणेविशेषनियमाः

नरास्थ्युपरिसंलेख्यंयंत्रंचाष्टविषेणच नरास्थिसम्भवाशस्तामारणेलेखनी तथा
चन्द्रार्धसदृशंकुण्डंदक्षिणस्यान्दिशिस्थितम्
लौहेननिर्म्मितौस्यातांम्मारणेस्रुक्स्रु वावपि
अजादुग्धेमशूरस्यश्यामायाश्चापिपायसम् भोजनम्मारणेशस्तंशीघ्रकार्यविधायकम्
उष्णेनकुक्कुटाण्डेनमरीचाक्तेनवारिणा एकपादेस्थितोमंत्रीतर्पयेद्वहुयत्नतः
एतानिचविशेषेणमारणेनियमानिच

ग्रंथीत्यादिप्रभेदश्चमन्त्राणांवक्ष्यतेधुना ग्रंथितंसंयुतंग्रस्तं समस्तञ्चविदर्भितम्
तथाचाक्रान्तमाद्यन्तङ्गर्भस्थंसर्वतोवृतम् तथायुक्तिविदर्भञ्चविदर्भग्रंथितंतथा
इत्येकादशधामंत्राप्रयुक्ताःकार्य्यसिद्धिदाः

## ग्रन्थनम्

साध्यनामार्णमेकैकंमंत्रार्णसंप्रचोदितम् । ग्रथितन्तत्समाख्यातंवश्याकृष्टिकरंपरम्

## संपुटम्

मन्त्रमादौवदेत्सर्वंसाध्यसंज्ञामनन्तरम् । विपरीतंपुनश्चान्तेमन्त्रन्तत्संपुटंस्मृतम्
शान्तिपुष्टिकरंज्ञेयन्त्रैलोक्यैश्वर्य्यदायकम्

## ग्रस्तम्

अर्द्धमर्धन्तथाद्यन्तेमन्त्रंकूर्य्याद्विचक्षणः । मध्येचास्यभवेत्साध्यंग्रस्तमित्यभिधीयते

---

१ अष्टविषंचाष्टमखण्डेऽवलोकनीयम्

अभिचारेषुसर्वेषुयोजयेन्मारणेषुच

## समस्तम्

अभिधानंवदेत्पूर्वंपश्चान्मन्त्रन्तथावदेत् । एतत्समस्तमित्युक्तं शत्रूच्चाटनकारकम् ।

## विदर्भम्

द्वौद्वौमन्त्राक्षरैतत्रएकैकंसाध्यवर्णकम् । विदर्भितन्तुतत्प्रोक्तं दुष्टघ्नं वश्यरक्षणम्

## आक्रान्तम्

मन्त्रेणान्तरितंसाध्यंसमन्तात्तिष्ठतेयदि आक्रान्तन्तद्विजानीयात्सद्य:सर्वार्थसिद्धिदम्
स्तंभस्तंभसभावेशवश्योच्चाटनकर्मसु

## आद्यन्तम्

सकृत्पूर्वंवदेन्मन्त्रंअन्तेचैवंतथापुन: । मध्येचास्यभवेत्साध्यमाद्यन्तमितितद्विदु: ।
अन्योन्यप्रीतियुक्तानांविद्वेषणकरंपरम्

## गर्भस्थम्

आदौचान्तेतथामन्त्रंद्विवारंसंप्रयोजयेत् साध्यनामसकृन्मध्येगर्भस्थन्तुतदुच्यते ।
मारणोच्चाटनंवश्यंप्रयुक्तं कारयेन्नृणाम् । हेतिनौसैन्यघोगर्भस्तंभनञ्चगतेस्तथा ।

## सर्वतोवृतम्

त्रिधामन्त्रंवदेत्सर्वंन्तथैवान्तेपुनस्त्रिधा । सकृत्साध्यंवदेन्मध्येतद्विद्यात्सर्वंतोवृतम्
सर्वोपसर्गशमनंमहामृत्युनिवारणम् । सर्वसौभाग्यजननंमृतोनामसृतप्रदम् ।

## युक्तिविदर्भ:

आदौमन्त्रन्ततोनामपुनर्मन्त्रंसमालिखेत् एवमेवत्रिधाकृत्वाभवेद्युक्तिविदर्भितम् ।
सर्वव्याधिहरंप्रोक्तंभूतापस्मारमर्दनम्

## विदर्भग्रन्थितम्

एकैकंसाध्यवर्णन्तुकृत्वामन्त्रविदर्भितम् पूर्ववत् ग्रथितञ्चान्यत्तस्याद्यन्तेप्रकल्पयेत्
विदर्भग्रथितंनोममन्त्रलक्षणमुत्तमम् । सर्वकर्मकरंप्रोक्तं सर्वैश्वर्यंफलप्रदम् ।
एवमेतेप्रयोगास्यु:सिद्धमन्त्रस्यसिद्धिदा:

**इति खरे श्रीवास्तव्य कायस्थकुलावतंस श्रीराय लक्ष्मणप्रसादात्मजेन श्रीराय ईश्वरी प्रसादेन संगृहीते गुप्तसारसंग्रहे नवम: खण्ड: समाप्त: ।**

# गुप्तसारसंग्रहे दशमखण्डम् ।

## अथकुलाम्नाय परिपालकानाम्विभक्तानिवि शदकर्त्तव्या कर्त्तव्य विचार: ।

### शाक्तानांकुलाम्नायपरिपालनमावश्यकम्

पतिहीनायथानारीसर्वकर्म्मविवर्जिता कुलम्बिनातथादिव्योवीरोवामसाधकः
नाधिकारीतिकौलेषुतस्माद्यत्नपरोभवेत्

### कुलाचारमहात्म्यम्

कुलाचारम्विनादेविकलौसिद्धिर्नजायते सत्यम्ब्रवीमितेदेविहृदिकृत्वावधारय

### सुरादानमाहात्म्यम्

सुरादानेनदेवेशि महायोगीश्वरोभवेत् काञ्चिकीस्फाटिकीदानेधनवृद्धिरनुत्तमा
डाकिनीदानमात्रेणवश्य:सर्वोभवेद्ध्रुवम् काञ्चिकीसुरयादेवीयोऽर्चयेत्परमेश्वरीम्
गुटिकाञ्जनस्तम्भनादिमारणोच्चाटनादिभि: महासिद्धेश्वरोभूत्वादशेत्कल्पायुतन्दिवि

### सुरापानप्रमाणम्

यावन्नचलतेदृष्टिर्यावन्नचलतेमन: तावत्पानम्प्रकुर्वीतपशुपानमत:परम्

### सुरायांशौचाशौचविचाराभाव:

येनकेनसमुद्धृत्ययेनकेनहृतापिवा । नात्रजातिविभेदोऽस्तिशोधितासर्वसिद्धिदा

### सुरापात्रप्रमाणम्

नवनाग्निबाणसंख्याकर्षैस्तुपरमेश्वरि हेतुपात्रम्प्रकर्त्तव्यमित्युक्तं कुलशासने
इतोऽप्यधिकपात्रंतुनकर्त्तव्यंहिसाधकै: न स्थूलंनैवसूक्ष्मंचपात्रंकुर्यान्मनोहरम्

### कर्षप्रमाणम्

गुञ्जाद्वादशमाषस्यात्तदष्टौकर्षउच्यते । तोलकस्यप्रमाणंहिकर्षंभवतिनिश्चितम् ।

### कुलाचारेतरेषांसुरापाननिषेध:

कुलाचारम्विनादेविसुरापानंकरोतिय: सयातिनरकंघोरंकल्पकोटिशतैरपि

## कुलाचारेऽपिब्राह्मणस्यसुरापाननिषेधः

एतस्यारमणस्यर्व्यंब्रह्मा मानसोपिच गुडार्द्रकरसेनैवसुरातुब्राह्मणस्यच

## वलिदानेहिंसोभावः

वलिदानंविनादेव्योः हिंसासर्वत्रवर्जिता

## वलिदानेपुमान्पशुर्ग्राह्यः

वलिदानविधौदेविविहितःपुरुषःपशु स्त्रीपशुर्नचहन्तव्यस्तत्रशाम्भवशासनात्

## वलिदानेपशुनिरूपणम्

मृगच्छागश्चमेषश्चलुलायःशूकरस्तथा शल्लकीशशकोगोधाकुर्म्मखड्गीदशस्मृताः
अन्यानपिपशून्दद्यात्साधकेच्छानुसारतः चाण्डालवलिदानेनमहासिद्धिःप्रजायते

## मांसार्पणप्रकारेविधिः

यस्मात्तस्मात्समानीतंयेनकेनविघातितम् । तत्सर्वंदेवताप्रीत्यैभवेदेवनसंशयः

## मांसाऽनुकल्पम्

लवणार्द्रकपिन्याकगोधूममांसपंचकम् । लशूनंचमहादेविमांसप्रतिनिधौस्मृतम् ॥

अथरक्तदानप्रकरणम् ।

## प्रशस्तरक्तविचारः

नरश्छागस्तथामेषोमहिषःशशकस्तथा । एतेषांचैवरक्तानिदेयानिपरमेश्वरि ॥

## रक्तदानफलम्

इषद्रक्तं घृतेनाक्तं निशायान्दिवसेऽपिवा । वलिन्दद्याद्विशेषेणकृष्णपक्षेशुभेदिने ॥
छागेदत्तेभवेद्वाग्मीमत्स्येदत्तेकविध्रुवम् महिषेधनवृद्धिस्यान्मृगेभोगफलंलभेत्
खगेदत्तेसमृद्धिःस्याद्गोधिकायाम्महाफलम्नरदत्तेसमृद्धिःस्यादिष्टेसिद्धिरनुत्तमा
ललाटहस्तहृदयेशिरोभ्रूमध्यदेशतः । स्वदेहरुधिरंदत्तेरुद्रदेहइवापरः ॥

## स्वगात्ररुधिरदानेनिषेधोपि

स्वगात्ररुधिरन्दद्यान्नकदाचित्साधकः ।

## कुलद्रव्यानयनप्रकारः

उच्छिष्टं नस्पृशेच्चक्रे कुलद्रव्याणिसुन्दरि बहिःप्रक्षाल्यचकरौ कुलद्रव्याणिदापयेत्

## कुलद्रव्यस्थानानि

सर्वस्थंदक्षिणेस्थाप्यंवामेचार्घ्यंन्निवेदयेत्पश्चिमेदेवतायाश्च कुलद्रव्याणिधारयेत

## चक्रे उच्छिष्टदाननिषेधः

गुरुशक्तिसुतानांचगुरुज्येष्ठकनिष्ठयोः उच्छिष्टंभक्षयेत्स्त्रीणांनान्योच्छिष्टं समर्पयेत्

दद्यात्स्नेहेनयोऽन्येभ्यस्सभवेदापदास्पदम् ।

## चक्रे भग्नपात्रादेःशान्तिः

चक्रमध्येघटेभग्ने पात्रेचपतितेभुवि । दीपनाशेचशान्त्यर्थं श्रीचक्रं कारयेत्सुधीः ॥

## कुलाचारिणांसंध्याप्रकारः

शिवशक्त्योःसमायोगोयस्मिन्कालेप्रजायतेसासंध्या कुलनिष्ठानांसमाधिस्थैःप्रतीयते

## तर्पणपदार्थविचारः

चन्द्रार्कानलसंघृष्टोकुलितंयत्परामृतम् । तेनामृतेनदिव्येनतर्पयेदिष्टदेवताम् ॥

## साधकेच्छयानैवेद्यदानविधिः

साधकेच्छाबलवतीदेयेवस्तूनिदैवते । यद्यदात्मप्रियंद्रव्यंतत्तदिष्टायकल्पयेत् ॥

## शैवादीनामपिकुलद्रव्येणपूजाविधिः

शैवेचवैष्णवेशाक्ते सौरेचगणदर्शने । बौद्धेपाशुपतेसांख्यव्रतेकलामुखेतथा ॥

सदक्षवामसिद्धान्तेत्रैनिकादिषुसर्वतः विनालिपिशिताभ्यां चपूजनम्विफलम्भवेत्

## कुलाचारेस्त्रीणाम्विवाहितपशुपतित्यागेदोषाभावः

आगमोक्तरतिःशम्भुरागमोक्तरतिर्गुरुः सपतिःकुलजायाश्चनपतिश्चविवाहितः ॥

विवाहितपतित्यागेदूषणंनकुलार्चने । विवाहितपतिंनैवत्यजेद्वेदोक्तकर्मणि ॥

## कुलाचारिणांनियमाभावः

दिक्कालनियमोनास्तिस्थित्यादिनियमस्तथा नजपेकालनियमोनार्चादिषुबलिष्वपि

स्वेच्छानियमउक्ताहिदृष्टमंत्रस्यसाधने वस्त्रासनस्थानदेहस्पर्शादिगेहबाधनात् ॥

नास्तिशुद्धिरिहक्कापिनिर्विकल्पमनश्चरेत् ।

## अथशाक्तानाम्भावत्रयंक्रमेणसाधनमावश्यक मतो भावत्रयं निरूपयति।

## अथ भावत्रयनिरूपणम्।

फलाकांक्षीमोक्षगामीसर्वभूतहितेरत:। विद्याकांक्षीधनाकांक्षीरत्नाकांक्षीचयोनर:।
कुर्याद्भावत्रयन्दिव्यम्भावसाधनमुत्तमम्। भावेनलभतेराज्यंधनंरत्नंमहाफलम्
वाराणस्यां कोटिलिङ्गपूजनेनचयत्फलम्। तत्फलंलभतेमर्त्य:क्षणादेवनसंशय:

## पशुभावस्यलक्षणम्

भावोऽहित्रिविध:प्रोक्त:पशुवीरादिभेदत:। पशुभावक्रमेणैवलक्षणंचवदाम्यहम्
नित्यश्राद्धंतथासंध्यावंदनंपितृतर्पणं। देवतादर्शनंपीठदर्शनंतीर्थदर्शनम्।
गुरोराज्ञापालनंचदेवतानित्यपूजनं। फलमूलाहाररतोदुग्धंगव्यंसमाहरेत्।
शाल्युद्भवनगृह्णीयाद्देवताध्यानतत्पर:। ऋतुकालंविनानैवस्वकान्तागमनंचरेत्।
वेदार्थचिंतनंनित्यंवेदपाठध्वनिप्रियं। सर्वनिन्दाविरहितंहिंसालस्यविवर्जितं।
रात्रौयंत्रंचमंत्रंचनस्पृशन्नत्यजेत्कचित्। दुर्गापूजांविष्णुपूजांशिवपूजांचनित्यश:।
लोभमोहकामक्रोधमदमात्सर्यवर्जित: यदिभावस्थितोमंत्रीपशुभावोपिसिद्धिभाक्
पशूनांप्रमरहानामितिलक्षणमीरितम्।

## शक्तिमंत्रेपशुभावस्यभयानकत्वम्

पशुभावरतायेचकेवलंपशुरूपिण:। पशुभावेस्थिता:मंत्रा:केवलंवर्णरूपिण:।
वैष्णव:पशुभावेनपूजयेत्परमेश्वरम्। शक्तिमंत्रेवरारोहेपशुभावोभयानक:।
दिव्यैर्वीरैर्महेशानिजायतेसिद्धिरुत्तमा। तस्माद्भावंप्रवक्ष्यामिवीरभावमनुत्तमम्।

## वीरभावस्यलक्षणम्

दृष्ट्वाकुलस्त्रियंदेविकुलवृक्षंविशेषत:। कुलगेहंतथादेविनमस्कुर्याद्वरानने।
कुलस्त्रियंमहेशानितंत्रमंत्रविशारदां। वृतीयांनरतांचैवबेश्यांभ्रष्टांकुलीनतथो।
वृद्धांयायुवतींवापिनमस्कुर्याद्वरानने। स्त्रीणांनिन्दांप्रहारंचकौटिल्यंचविवर्जयेत्।
विनाशक्तिंनपूजास्तिमत्स्यमांसविनाप्रिये। मुद्रांचमैथुनंचापिविनानैवप्रपूजयेत्।
स्त्रीभगंपूजनाधार:स्वर्णरूप्यात्मकंकुश:। अभावेसर्वद्रव्याणामनुकल्प:कलौयुगे।
त्रिपुण्डंभस्मनाकुर्याद्रक्तचंदनकेनवा। रूद्राक्षभूषणंदेविसर्वाङ्गेचमहेश्वरि।
श्रीखण्डपङ्करुधिरंभूपितंतुमनोहरं। शरीरंकारयेद्देविगंधर्वदेवमुत्तमम्।

समयं च गृहीत्वा तु पूजादौ च महेश्वरि । निशीथे पूजनं चैव कर्त्तव्यं च महेश्वरि ।
रात्रौ चैव यजेद्देवीं न दिवापि कदाचन । केवलं भैरवो भूत्वा यजेद्देवीं सनातनीम् ।
रात्रौ ताम्बूलपूरास्यो जपेन्मंत्रं महेश्वरि । सर्वं चैव महादेवि परदेव्यै समर्पयेत् ।
आगमार्थक्रियाकार्यासदासत्कुलचेष्टया । वीराणामुद्धतानां च मच्छरीरानुगामिनां ।
सदा दृष्टाकुलतत्वानामिति लक्षणमीरितम् ।

## वीराचारः

भोगो मोक्षायते चैव पातकं सुकृतायते मोक्षायते च संसारः साधकः शुद्धभावतः ।
पंचतत्वेन कर्त्तव्यं सदैव पूजनं महत् । अतिगुप्तेन कर्त्तव्यं सर्वथैव सुनिश्चितम् ।
इत्याचारपरः श्रीमान् जपपूजापरायणः । पालकः कुलतत्वानां परतत्वे प्रलीयते ।
अणिमाद्यष्टसिद्धीनामाश्रयो साधकोत्तमाः प्रायश्चित्तं भृगोष्पातं सन्यासं व्रतधारणं
कायक्लेशमनास्तिक्यं तीर्थयात्राद्युपोषणं वर्जयेच्च प्रयत्नेन यदीच्छेत् सिद्धिमात्मनः।
वीरहत्या सुरापानं वीरद्रव्यापहारिता । वीरस्त्रीगमनं चैव तत्संयोगो च पंचमम्
महापातकमित्युक्तं सर्वथा परिवर्जयेत् ।
शक्तो दर्पं घृणां लज्जां वर्जयेत क्रोधलक्षणम् । कदाचिद्दर्परूपेण पुष्पेणापि न ताडयेत् ॥
शक्तौ न विस्मये कार्यं यस्मात् क्रुद्धा च चण्डिका ।
आगते स्वागतं कुर्यात् कौलायोगात् स्वलीलया ।
तल्पाच्चोत्थाय हस्ताग्रे धृत्वा संवेशयेत्ततः । वामभागसमासीनां सुवेशां चारुहासनां
गंधमाल्यं ततो दत्वा कुलद्रव्यं नियोजयेत् हेतुयुक्तं सताम्बूलं दत्वा भुक्त्वा च साधकः
पृच्छेत् कुलकथां सर्वां लौकिकालौकिकादिकाम्
तासां निन्दा भयक्रोधकटूक्तियोजनं यदि करोति कुलशास्त्रज्ञः सिद्धोऽपि नश्यति ध्रुवम्
प्रमत्तां मत्यजां कन्यां पुष्पितां पतितां स्तनीं विरूपां मुक्तकेशीं च कामार्त्तां च न निन्दयेत्
शक्तिपूजा सदा कार्या प्रसन्ना येन जायते । सुखं शक्तिप्रसन्नेन दुःखं तद्वर्जनाद्भवेत् ।
भक्ष्यं भोज्यं तथा पेयं गंधं पुष्पं तथा पुनः । शक्तौ निवेद्य प्रथमं तथा चाभरणादिकं ।
तत्पश्चादात्मसात्कुर्यात् सिद्धार्थी साधकश्च यः । रात्रौ पर्यटनं चैव रात्रौ तु शक्तिपूजनम्
न करोति कथं चैव साधकः कौलिको भवेत् ।
प्राणस्त्विना यथा देहि स्यन्दितुं नैव शक्यते शक्तिस्त्विनापि पूजायां नाधिकारी भवेत्तदा
विना शक्त्या तु या पूजा विफला नात्र संशयः तस्माच्छक्तियुतो वीरो भवेच्च यत्नपूर्वकम् ॥
विना द्रव्याधिवासेन न जपेन्न स्मरेत्सदा । विना हेतुकमास्वाद्य क्षोभयुक्तो भवेन्नरः ॥
आमिषासवसौरभ्यहीनं यस्य मुखं भवेत् । प्रायश्चित्ती स वर्ज्यश्च पशुरेव न संशयः ॥

यावदासवगंधःस्यात्तावत्पशुपतिःस्वयम् विनालिमांसगंधेनपशुःपशुपतिःस्वयं ॥
नपूजांनजपंकुर्यान्नध्यानंनचचिंतनम् तस्मात्भुक्त्वाचपीत्वाचपूजयेत्परमेश्वरीं ॥
रक्तमाल्याम्बरधरोयोषित्युक्तोमहाशयः ताम्बूलपूरितमुखोधूपामोदसुगंधितः॥
देवोभूत्वायजेद्देवंनादेवोदेवमर्चयेत् नक्रमच्युतिदोषोऽस्तिनाचारदोषदूषणम् ॥
नभक्त्वानचपीत्वाचनजपेन्नस्मरेत्तदा । येस्मरंतिनराःमूढ़ास्तेषांदुःखंपदेपदे ॥
आनन्देनविनायस्तुचंडिकांपरिपूजयेत् । रोगीदुःखीभवेत्सोपिमृतेचनरकंव्रजेत् ॥
दिवसेनरमेन्नारींतद्योनिंननिरीक्षयेत् स्त्रीदोषोनैवकर्त्तव्योविशेषात्पूजनंमहत ॥

जपस्थानेमहाशंखंनिवेश्योर्द्धजपंचरेत्
स्त्रियंगच्छन्स्पृशन्पश्यन्विशेषात्कुलजांशुभां ॥

भोज्यान्नासन्भक्तानिभुक्त्वाभक्ष्यचरेज्जपंविनापीत्वासुरांभुक्त्वामांसंगत्वारजस्वलां
योजपेच्चण्डिकांदेवींदुःखंतस्यपदेपदे । निष्ठीवनंमलंमुत्रंअधोवायुविसर्जनं ॥
चक्रमध्येतुयःकुर्यात्सभवेत्योगिनीपशुः । परिहासंप्रलापंचवितंडावहुभाषणं ॥
औदासिन्यंभयंक्रोधंचक्रमध्येविवर्जयेत् । पात्रहस्तोमहादेविनभ्रमेच्चक्रमध्यतः ॥
नैकहस्तेनदातव्यंनमुद्रावर्जितम्प्रिये । सशब्दंनपिवेद्द्रव्यंतन्नैवनचपूरयेत् ॥
नान्योन्यंताडयेत्पात्रंनपात्रंपातयेद्धः । रिक्तपात्रंनकुर्वीतनपात्रंभ्रामयेत्प्रिये ॥
नपात्रंलंघयेद्धीमान्पात्रंनोत्पातयेत्क्वाचित् प्रक्षाल्यगोपयेत्पात्रमित्याज्ञापरमेश्वरि
श्रीचक्रस्यंकुलद्रव्यंयःपशुभ्यःप्रयच्छति स्नेहाल्लोभाद्भयाद्वापिसभवेत्योगिनीपशः

यथास्त्रीपुत्रमित्रादिदृष्ट्वाचेतःप्रहृष्यति
तथाचेत्कौलिकान्दृष्ट्वासभवेत्योगिनीप्रियः ॥
स्वचर्म्मस्थंयथाक्षीरंनपेयंस्याद्विजातिभिः ।
तथापशुमुखाद्धर्म्मोनश्रोतव्यश्चकौलिकैः ॥

स्त्रीणांशतापराधेनपुष्पेणापिनताडयेत् दोषान्नगणयेत्स्त्रीणांगुणानेवप्रकाशयेत्
तिष्ठन्तिकुलयोगिन्यःकुलवृक्षेषुसर्वदा । तत्पात्रेषुनभोक्तव्यमर्चयेत्तुविशेषतः ॥
येनकेनसमुत्पन्नायेनकेनहृतापिवानात्रजातिविभेदोऽस्तित्शोधितासर्वसिद्धिदा
दूरदेशात्समानीतंपक्वंवापक्वमेववा । वीरेणपशुनावापिचक्रमध्येगतंशुचिः ॥
म्लेछेनस्वयचेनापिकिरातेनापिहूणुना । आमंपक्वंयदानीतंबीरहस्तार्पितंशुचिः ॥
लोकेनिष्कृष्टमुत्कृष्टंलोकोत्कृष्टंनिकृष्टकम् । कुलमार्गसमुद्दिष्टंभैरवेनमहात्मना ॥
अनाचारःसदाचारस्त्वकार्यंकार्यमेवचअसत्यमपिसत्यंस्यात्कौलिकानांकुलेश्वरि
अपेयमपिपेयंस्याद्भक्ष्यंभक्ष्यमेवच्च अगम्यमपिगम्यंस्यात्कौलिकानांकुलेश्वरि ॥

नविधिर्न निषेधःस्यान्नपुण्यंनचपातकम् नस्वर्गोनैवनरकःकौलिकोनांकुलेश्वरि ॥
विनामांसेनयापूजा विनामद्ये नतर्पणं विनाशक्त्यातुयत्पानंनिष्फलंकथितंप्रिये ॥
मत्स्यमांसविहीनेनमद्ये नापिचतर्पयेत् । कुलद्रव्यैर्विनाकुर्याज्जपयज्ञतपोव्रतं ॥
निष्फलंचभवेद्देविभस्मनीवयथाहुतिः उत्तमानित्यपूजास्यात्पर्वपूजाचमध्यमा ॥
मासपूजाधमाप्रोक्तामासान्तेचपशुर्भवेत् एकादश्यांव्यतीपातेकर्मलोपंनकारयेत्
अष्टम्यांचचतुर्दश्यांपूजाकार्याप्रयत्नतः । नलंघयेद्धर्मंचलंघनात्पातकीभवेत् ॥

## लतासाधनम्

लतानांसाधनंवक्ष्येवीराणांसिद्धिहेतवे तत्रवर्ज्याचयानारीकथ्यतेतंत्रवर्त्मना ॥
त्रिपुरैवगुरुःसाक्षात्तत्पत्नीतत्स्वरूपिणी । मनसाकर्मणावाचारमणंतत्रवर्जयेत् ॥
गुरोःस्नुषाचकन्याचस्वपुत्रीमंत्रपुत्रिका । एतस्यारमणंवर्ज्यंब्रह्मविन्मानसेन च ॥
कौलिकस्यचपत्नीचैसाक्षात्सिद्धेश्वराशिवा तस्यारमणमात्रेणकौलिकोनारकोभवेत्
मातापित्रोरघोर्ज्याशिवहीनातथैवच । अन्यस्थानेविचारेचदेवीशापःप्रजायते ॥

## शिवउवाच

शृणुदेविप्रवक्ष्यामिअतिगुह्यतरम्महत् । प्रकाशात्सिद्धिहानिःस्यात्तस्माद्यत्ने-
[ नगोपयेत् ॥

स्वशक्तिं परशक्तिं वादीक्षितांयौवनान्विताम् । विदग्धांशोभनांशुद्धांघृणालज्जावि-
[ वर्जितां ॥

आनीयबहुयत्नेनलतांसाधनमाचरेत् स्वशक्तिंसिद्धिमोदायसिद्धमंत्रीततोभवेत्
सिद्धमंत्रीकुलाचारेपरयोषांप्रपूजयेत् । सिद्धमंत्रीयजेच्छक्तिंकायेनमनसापिच ॥
परयोषांविशेषेणपरयोषांप्रपूजयेत् । आनीयचकुलंरम्यंकुलभक्तिंकुलार्चने ॥
ततस्तच्छक्तिकर्णेचऋषिच्छन्दसमन्वितं । मूलमंत्रंत्रिरावृत्याकथयेद्वामकर्णके ॥

अद्यप्रभृतिशक्तित्वंकुलदेवार्चनंकुरु

गुरोराज्ञांसमादाय घृणालज्जाविवर्जिता । शिवोक्तविधिनादेवकरिष्यामिकुलार्चनम्
आदिनाथकुलाचारकामिनीकामनायका । त्वत्पदाम्भोरुहच्छायांदेहिमेकुलवर्त्मनि
गते चप्रथमेयामेस्वकुलंतूलकोपरि । वामभागेसमानीयरक्तवस्त्रसमन्वितम्
नानागंधसमायुक्तंनानारत्नसमन्वितम् । ललाटेमंत्रमालिख्यमध्वेनामविचर्चितम्
ताम्बूलपूरितमुखस्ताम्बूलारुणालोचनः । कुलाकुलजपंकृत्वासिद्धिमायातितत्क्षणात्
एवमाकर्षितेमन्त्रीसिद्धमन्त्रीकुलेश्वरि । तावत्प्रयोगःकर्त्तव्योयावत्सिद्धिर्नजायते

सिद्धमन्त्री कुलाचारे कुलयोषां प्रपूजयेत् । अथेदानीं प्रवक्ष्यामि लक्षणं पीठचतुष्टयम्
पूर्णगिरिश्च प्रथमं उड्डीयानं द्वितीयकम् । जालंधरं तृतीयं च कामरूपं चतुर्थकम्
कृते पूर्णगिरिश्चैव त्रेतायां च द्वितीयकः । जालंधरं द्वापरे च कामरूपं कलौ युगे
चतुःपीठानि पीठानि शक्तिदेहे भुयानि च । तानि त्वां प्रवक्ष्यामि गुह्याद् गुह्यतराणि च
शक्तेः सर्वशरीरं यत् पीठं पूर्णगिरिः स्मृतम् तस्याः शिरश्च शुभगे उड्डीयानं प्रकीर्त्तितम्
स्तनौ जालंधरं ज्ञेयं कामरूपं भगस्तथा । एषु पीठेषु स्थित्वा तु यं यं मन्त्रं जपेत् प्रिये ।
तत्तत् फलमवाप्नोति देवता सुप्रसीदति । नानाशक्त्या सह लापं येच कुर्वन्ति साधकाः
ते शीघ्रकालात् शुभगे फलं प्राप्स्यन्ति मानवाः तामानीय साधकेन्द्रो दद्यात् पाद्यादिकं शुभम्
पंचाचारेण तां शक्तिं पूजयित्वा यथाविधि । शतं शीर्षे शतं भाले शतं सिंदूरमंडले
शतं मुखे शतं कण्ठे शतं हृदयमंडले । शतं छन्दे स्तनद्वन्द्वे शतं नाभौ जपेत् सुधीः
योनिपीठे शतं जप्त्वा साधकः स्थिरमानसः । एवं सहस्रं संजप्य देवीरूपां विचिंतयेत्
शिवशक्तिस्वरूपं च चिंतयेत् साधकोत्तमः । शिवमंत्रेण देवेशि स्वलिंगं पूजयेद्यथा
ताम्बूलं तन्मुखे दत्वा साधको हृष्टमानसः । तदनुज्ञां समादाय योनौ लिंगं विनिःक्षिपेत्
ओं धर्माधर्मं हविर्दीप्त आत्माग्नौ मनसा स्रुचा सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम्
स्वाहेत्यनेन मन्त्रेण हुनेत् सर्वसमृद्धये । ततो जपेत् सहस्रं वै शक्तियुक्तो भवेन्नरः
शतमात्रापि प्रजप्तव्यं ततो न्यूनं न कारयेत् । ततः पूर्णाहुतिं दद्यान्मंत्रेणानेन साधकः
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनी स्रुचा । धर्माधर्मकलास्नेहपूर्णामग्नौ जुहोम्यहं
स्वाहेत्यनेन मन्त्रेण पूर्णाहुतिं समाचरेत् । शुक्रोत्सारणकाले तु महादेव्यै निवेदयेत्
एवं कृते मन्त्रसिद्धिर्भवत्येव न संशयः । यं यं प्रार्थयते कामं तं तं प्राप्नोति निश्चितम्
रोगी रोगात् प्रमुच्येत धनेन च धनाधिपः । वायुतुल्यबलो लोके दुर्जयः शत्रुमर्दनः
कामतुल्यश्च नारीणां रिपूणां च यमोपमः । एतत्कल्पेन देवेशि किं न सिद्ध्यति भूतले
अष्टैश्वर्यमवाप्नोति स नरः श्रीसदाशिवः । अथान्यत् संप्रवक्ष्यामि साधनं भुवि दुर्लभं
येन कृते लभेत् सिद्धिं देवानामपि दुर्लभाम् । ललाटे शक्तितमन्त्रं तु निराबृत्या लिखेत्ततः
तन्मध्ये कामबीजं च विलिखेत् कामलाञ्छितम् । कामेन पुटितं कृत्वा पूजयेत् परमेश्वरीं
सम्पूज्य कालिकां देवीं यन्त्रं च परिपूजयेत् । तत्रचित्तापरो योगी जपेल्लक्षं निराकुलं
संगृह्य कुलपुष्पं तु पूजयेच्च पुनः पुनः । सहस्रं तर्पयेत् पीठे यन्त्रप्रक्षालनोदकैः
एवं कृते लभेत् सिद्धिं सत्यं सत्यं न संशयः । संक्षेपयजनं वक्ष्ये यथातन्त्रानुसारतः
आलिङ्गनं भवेन्न्यासश्चुम्बनं ध्यानमीरितम् शीत्कारं यजनं प्रोक्तं नैवेद्यं नखलेखनम्
पानं जिह्वामृतं ज्ञेयं रमणं च जपो भवेत । आनन्दस्तवनं विद्धि रेतःपातो विसर्जनम्

## गोलोद्भवविचारः

गोलोद्भवम्प्रवक्ष्यामिवीराणांसिद्धिहेतवे ।
कुलीनांदीक्षिताम्मत्ताम्पतिहीनाम्विचक्षणाम् ॥

सालङ्कारांहेतुयुक्तामनपत्याम्मनोरमाम् सुन्दरींशोभनांक्षोणाम्पीनोन्नतपयोधराम्
साधकोकांक्षन्द्दवांकलाशास्त्रविचारिणीम् न्यासादिकम्प्रकुर्वीत स्वकल्पोक्तविधानतः
पूर्वोक्तक्रमयोगेनतत्त्वमुत्पादयेत्सुधीः । तत्वंप्रगृह्ययत्नेनप्रजार्थंसाधकोत्तमः ॥
इदंगोलोद्भवंद्रव्यंदेवताप्रीतिकारकम् । कुण्डगोलोद्भवादीनांशोधनंचप्रचक्ष्यते ॥
ओंविष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंषतु । आसिंचंतुप्रजापतिधातागर्भंदधातुते ॥
गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति । गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥
ह्रूं ज्रूं स्लूं ग्लूं ततःस्वाहेत्यनेनमंत्रेणशोधयेद्बुद्धयत्नतः ।
वीर्यमेतत्समादायविशेषार्घे नियोजयेत्
तेनामृतेनदेवेशींतर्पयेत्साधकोत्तमः सान्निध्यंजायतेदेव्याःसर्वंकाममुपालभेत् ॥
निर्विकल्पकचेतस्तुकुर्यादेवंसमाहितः । शङ्कयाजायतेग्लानिःशङ्कयादुःखवभाजनं ॥
शङ्कयासर्वहानिःस्यात्शङ्कयाधनहानिता ।
शङ्कयासिद्धिहानिःस्यात्तस्माच्छङ्काम्परित्यजेत् ॥

पंचाचारेणदेवेशिकुलशक्तिंप्रपूजयेत् नटीकापालिनीवेश्यारजकीनापिताङ्गना
योगिनीश्वपचीशुण्डीभूमींद्रतनयातथा गोपिनीमाल्यकारस्यप्रशस्तासाधनेशिवे
गुप्तवेश्यामहावेश्याकुलवेश्यामहोदया राजवेश्यादेववेश्याब्रह्मवेश्याचसप्तधा ॥
कुलजागुप्तवेश्यास्यान्निर्लज्जामदनातुरापशुभिर्नाश्रितालोकेगुप्तवेश्याप्रकीर्त्तिता
कुलजाकुलवेश्यास्यात्महावेश्याप्रकीर्त्तिता ।
भगलिङ्गकलापीठेचुम्बयेच्चपुनः पुनः ॥
एवंविधाकुलीनाचेद्ब्रह्मवेश्याप्रकीर्त्तिता ।
वेश्याव्रतमतेयस्मात्तस्माद्वेश्याभिधीयते ॥

वर्णशङ्करतोजातासर्ववेश्याप्रकीर्त्तिताआमंत्रणंत्रिसंध्यंवभगलिङ्गलप्रकीर्त्तनम्
वेश्यानांचजपाङ्गेनशङ्करेणप्रचोदितम् । जपाङ्गेनविनावेश्यावर्जनीयाकुलार्चने ॥
नानावीराश्रितावेश्यापशुसङ्गगताचया । वर्जनीयाप्रयत्नेनलतासाधनकर्म्मणि ॥
योज्याचेत्सिद्धिहानिःस्यात्श्रेष्ठवेश्याकुलार्चने वश्यायांजपमात्रंतुपुरश्चरणमुच्यते
विपरीतरतौजन्याकालीविहरेद्भुवि योनिश्चशक्तिर्माताचलिङ्गञ्चजनकःपिता ॥
मातृभावंपितृभावमुभयोरपिचिंतयेत् । लिङ्गरूपोमहाकालोयोनिरूपाचकालिका ।

द्वयोर्योगपराधन्यात्तयोर्योगपरोमत: । विवाहितपतित्यागेदूषणंनकुलार्चने ।।
सर्वसिद्धिप्रदावेश्याकामिनीरूपधारिणी पितृभूमिसमाख्यातासदाशिवनिवासिनी
अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोरपि । मातृमुखेपितृमुखंदत्त्वाकालींजपेत्सुधी:
सर्वपापविनिर्मुक्तोनिर्वाणपदवींव्रजेत् ।

## महाचीनक्रम:

महाचीनक्रमंवक्ष्येवीराणांचसुखावहम् । महाचीनक्रमंदेवि विविधंकथयामिते ।।
स्नानादिमानसंशौचंमानस:प्रथतोजप: । मानसंपूजनंदिव्यंमानसंकल्पनादिकम् ।।
सर्वत्रशुभ:कालोनाशुभोविद्यतेक्वचित् । नविशेषोदिवारात्रौनसंध्यायांमहानिशि
वस्त्रासनस्थानगेहदेहस्पर्शादिवारिण: । शुद्धिंनचाचरेदत्रनिर्विकल्पंमनश्चरेत् ।।
नात्रशुद्ध्याद्यपेक्षास्तिनचामेध्यादिदूषणम् । यथेच्छंचिंतयेन्मंत्रीसर्वकामफलप्रदम्
गद्यपद्यमयीवाणीसभायांतस्यजायते । तस्यदर्शनमात्रेणवादिनोनिष्प्रभा:मता: ।।
राजानोऽपिचदासत्वंभजन्तेकिम्परेजना: सर्वदापूजयेद्देवीमस्नात:कृतभोजन: ।।
महानिश्यशुचौदेशेबलिंमंत्रेणदापयेत् स्त्रीनिन्दांचनकुर्वीततासांप्रेमविवर्द्धयेत्
अत्युत्कटापराधेऽपिनतस्या:द्वेषमाचरेत् . स्त्रीद्वेषोनैवकर्त्तव्योविशेषात्पूजनंस्त्रिय:
पीठानामुत्तमम्पीठंजपात्सार्वज्ञदायकम् योनिपीठेनिवेश्यैवश्रोण्यांकमललोचने ।।
योन्यांसंक्षिप्यलिङ्गंतुजपेत्तद्गतमानस: सहस्रंप्रत्यहंजप्त्वाकन्दर्पसदृश:पुमान् ।
जायतेनात्रसंदेह:सत्यंसुरगणार्चिते । योनिकुन्तलमादायगृहणीयादन्तरीयकम् ।।
एवंवत्सरपर्यन्तंजपेत्तद्गतमानस: । नीलासरस्वतीकालीचान्नपूर्णाचभैरवी
साधकायप्रहृष्टायप्रसीदतिनसंशय: । साधकोपिमहादेविवत्सरंतांप्रपश्यति ।।
इहतेसंशयोनास्तिसत्यंसत्यंमहेश्वरि । अतिस्नेहात्सुरश्रेष्ठेप्रकाशितमिदंतव ।।
रहस्यंशृणुचार्वङ्गियेनसिध्यतिसुन्दरि । रजस्वलांस्त्रियंवीक्ष्यसहस्रंप्रजपेद्यदि ।।
तदैवमंत्रसिद्धि:स्यान्नात्रकार्याविचारणा षोडशैर्दिवसैर्देविसिद्धिमाप्नोतिसाधक:
पत्नीतेहस्तमारोप्यनिर्भयोयतमानस: । योनौलिंगंप्रविश्याथसहस्रंप्रजपेन्मनुं ।।
कवितांलभतेसिद्धंअमृतत्वंचगच्छति । धनकामस्तुयोविद्वान्महदैश्वर्यकामुक: ।।
वृहस्पतिसमोयस्तुभवितुंकामयेन्नर: । अष्ट[illegible]कुलमामंत्र्यमंत्रवित् ।।
मैथुनंय:प्रकुर्यात्तुसर्वंफलंलभेत् । परस्त्रियंप्रपश्यन्तिनग्नंखादंतिनित्यश: ।।
निर्वाणंतेचयास्यंतिभगवत्या:प्रसादत: । चीनाचारंसमाश्रित्यवीरास्तेत्रमहाशया ।।
तत्त्वज्ञानमया:सर्वेविहरंतिमहीतले । महादेवेनयत्प्रोक्तंसत्यमेतन्नसंशय:
अथवापरमेशानिमानसंसर्वमाचरेत

स्नानंतुमानसंप्रोक्त वैदिकोमानसस्तथा । यन्नभुक्त्वामहापूजामानसंभोजनन्तुतत्
स्वकीयापरकीयाचामानसंतुरमेत्स्त्रियम्मानसंमद्यमांसादिस्त्रीकुर्य्यात्साधकोत्तम।
स्वयम्भूकुसुमंतद्वत्स्वस्थानंसमुपाचरेत् । मानसंभगहोमादिमानसंभगपूजनम्
सर्वंतुमानसंकुर्य्यात्तेनसिद्ध्यतिसाधकः । नकलौप्रकृताचारःसंशयात्मनिनिषसः
मानसेनैवभावेनसर्वसिद्धिमुपालभेत् ।

## वीराणांषट्कर्म्मनिरूपणम्

### श्री देव्युवाच ।

देवदेवजगद्वन्द्यसुरासुरनमस्कृत । इदानींश्रोतुमिच्छामिवीरषट्कर्म्मसाधनम्

### ईश्वरउवाच ।

शांतिवश्यस्तम्भनानिविद्वेषोच्चाटनन्तथा । मारणपरमेशानिषट्कर्मेदंप्रकीर्त्तितम्
तारिणींकालिकांछिन्नामधिकृत्यजगन्मयि । कथयामितवस्नेहाद्भुतसिद्धिकरम्परम्
षोड़शैरुपचारैस्तुयजेद्वीरःस्वशक्तितः । शून्यागारेमहारण्येदेवतायतनेऽपिवा
पञ्चकर्म्मप्रकुर्वीतमारणन्तुशवोपरि । तदभावेपितृभूमौवांसांसिकथयामिते
मुख्यंदिगम्बरंज्ञेयंद्वीपिचर्म्मद्वितीयकम् । तदेवरक्तक्षौमंवानान्यत्कुत्रप्रकल्पयेत्
शांत्यादिषुक्रमेणैवपूजापात्रंसुरेश्वरि । स्वर्णमादौद्वितीयंचराजतंताम्रमेशिला
विद्वेषोच्चाटनेताम्रंकपालंमारणेशुभम् । अभावेस्फाटिकोजप्याद्दन्द्राक्षैर्वाजपेत्प्रिये
एकहस्तेद्विहस्तेचचतुर्हस्तेतमन्ततः । स्थिरासनश्चरेत्तत्रनभयंतत्रचिन्तयेत्
भयेजातेमहेशानिभैरवोक्तमनुंजपेत् । विषंचवज्रज्वालेनहुहुम्मनसःपरम्
सर्वभूतान्ततःकूर्च्चंमन्त्रांतेभैरवोमनुः । ततोभूतबलिंदद्यात्साधकोधर्म्मसम्मितम्
सद्यतैलंमहेशानिउद्दंशकालकंचरेत् । कुजवारांदियोगेनपञ्चकर्म्मसमाचरेत्
शनौवमारणंदेविनिश्चितंवीरवन्दिते । रात्रियोगेनकर्त्तव्यंसर्वंकर्मशुचिस्मिते
प्राचितानुप्रजपेत्सम्यक्स्वमंत्रमतुलंशिवे प्रयोगस्यफलाप्त्यैस्वस्वरक्षाकरम्महत्
ततःसाधनदिनेमन्त्रीयममागते निशि मादिभिःपञ्चभिर्दव्यैः कुलविलासिनीम्
दिग्वासगलिताशवचिकुराकुलकालिकेशक्तियुक्तोजपेद्विद्यांमहातांमनसात्तवत्
लक्षसंख्यांमहेशानिशक्तिपूजापुरस्सरम् मत्स्यंभोजयेद्विद्वान्कौलिकान्यान्दिनांतिमे
मांसंमद्यंतथामत्स्यंहुनेत्प्रोक्तंशिवे । दक्षिणांगुरवेदद्यात्गुरुरूपेणशाम्भवि
एवमुक्तविधानेनदिव्योवावीरपुंगवः । यदिकुर्यान्महेशानिदेवानयितथानयेत्
नोपेक्षाजायतेकांतेअवश्यंफलभाग्भवेत् । महाप्रयोगेदेवेशिइच्छांवाद्विहरेत्

षडू.....तंदेवि....येत् । विधिःसर्वत्रकथितोदिव्यवीरपशुक्रमात्
क्रमेणफलमाप्नोतिव्यत्ययेपातकीभवेत् इतितत्कथितंतुभ्यंसम्यक्षट्कर्म्मगोचरम्
गोपनीयंखलेदुष्टे पशुपासरलन्निधौ ।

## षट्कर्म्मणिसुराशक्त्योर्विचारः

### श्री देव्युवाच

सुरावाकिन्निजादेवशक्तिर्वाकीदृशीशुभा । षट्कर्म्मसुयथायोग्यस्त्वद्मेकथयनिधे

### ईश्वरउवाच

माध्वीशांतिकरीप्रोक्तावश्येचस्फाटिकीशुभा स्तम्भनेडाकिनीज्ञेयाविद्वेषेपैष्टकीमता
उच्चाटनेतथागौडीमारणेभैरवीतथा । एतासांलक्षणंदेविकथितंकुलमोहने
माध्वीमधुसमुद्भूतास्फाटिकीकांजिकीमता कद्रूजाडाकिनीदेविपैष्टीपिष्टस्यसम्भवा
गौडीगुडसमुद्भूतात्ज्ञभूताभैरवीमता । पद्मिनीशांतिदाप्रोक्तावश्येचशङ्खिनीमता
स्तम्भनोच्चाटनेदेविप्रशस्तानागवल्लभा । मारणेचतथाशस्ताडाकिनीशत्रुमृत्युदा
गौरांगीदीर्घकेशीयासदाचामृतभाषणी । रक्तनेत्राशुशीलाचपद्मिनीसाधनेशुभा
मंत्रसिद्धिकरीशेषाशङ्खिनीसापिभाविनी दीर्घांगीसाशङ्खिनीस्यातजगद्रंजनकारिणी
श्यामांगीशुभदेहाचनखर्वानातिदीर्घिका । दीर्घकेशीदृढपृष्ठामृदुभाषाचनागिनी
कृशांगीकृष्णांगीचचतुरामदतापिता । ह्रस्वकेशीदीर्घप्राणासदानिष्ठुरभाषिणी
सदाक्रुद्धादीर्घदेहामहारावपरायणा । निर्लज्जाहास्यहीनाचनिद्रालुर्बहुभक्षिका
इयंडाकिनीप्रोक्तामृत्युयोगेप्रशस्यते । एतास्तुशक्तयोदेविसर्वजातिसमुद्भवाः
सायत्याश्चयुवत्यश्चजातपुत्रादिकाशुभाः ।
आद्याकुलरसैःपूज्याभक्तिभावेनकामिनी

### श्री देव्यूवाच

केनकेनचमन्त्रेणमंत्रीषट्कर्म्मभाग्भवेत् । तत्तन्मन्त्रंमहादेवपद्यहंतवल्लभा

### ईश्वरउवाच

एकाक्षरंकालिकायास्तारायास्तुत्रिबीजकम् । पञ्चवैरोचनीयायाःमनुरेकादशाक्षरी
मन्त्रतेजोपहारीचमनुराख्यातएवच । बहुनात्रकिमुक्तेनशृणुमत्प्राणवल्लभे
केवलंशक्तिबीजेनजपेद्देविसमाहितः । तथापिफलसिद्धिःस्या च्चिद्रमेतज्जगत्माजे

ताम्बूलस्वदनेद्याद्दिष्टमूर्त्तिंस्विभाव्यच । ततःषडङ्गमंत्रैश्चषड्ङ्गन्यासमाचारेत्
मूलेनव्यापकंकृत्वामूर्ध्निमूलंशतंजपेत् । हृदयेकामबीजंचवधूबीजंचसंजपेत् ।
नाभौश्रींगुह्यदेशेचसर्वबीजंचपार्वति । मौलौचवाग्भवंकामंकुण्डलींकुलकुण्डलीं ।
शक्तिबीजंजपेन्मंत्रीसर्वंसिद्धीश्वरोभवेत् । वामेमायांश्रावयेच्चकर्णेचैवमहेश्वरि ।
एवंक्रमेणदेवेशिनारोशुद्धि प्रजायते । दीक्षितानांचदेवेशिशुद्धिर्नास्तिकदापिहि ।
अथवामूलमंत्रेणसर्वंसंशोधनंचरेत् ॥
गुरुदेवंचसन्तर्प्यपिबेत्सामयिकैस्सह । प्रथमेचगुरोर्ध्यानंद्वितीयेइष्टचिन्तनं ।
तृतीयेन्यासजालंचचतुर्थेजपमाचरेत् । पंचमेपंचमंकृत्वापठेध्यानपरोभवेत् ।
स्तोत्रादिकंपठेन्मंत्रीसप्तमेवीरवन्दिते । करेसंस्थाप्यपात्रंतुपात्रवन्दनमाचरेत् ।

## पात्रवन्दना

श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृत प्लावितम्
क्षेत्राधीश्वरयोगिनीसुरगणैस्सिद्धैस्समाराधितम् ॥
आनन्दार्णवकम्महात्मकमिदंसाक्षात्त्रिखण्डामृतम्
वन्देश्रीप्रथमंकराम्बुजगतम्पात्रंविशुद्धिप्रदम् ॥
कृत्वामंत्रतनुंस्मरेद्गुरुपदंदेवींकुलांचिन्मयीं ।
पश्चाद्द्वारत्रयंहृदासनवृतन्दीपैर्युतङ्कजलैः ॥
पुष्पादिप्रभिमंत्रितंचनिविडंसम्मोहकध्वंसकं ।
येसंचिन्त्यपिवन्तियान्तिखलुतेभुक्तिंचमुक्तिम्परम् ॥
अनुज्ञाम्गुरतोलब्ध्वागृह्णामीतिस्वयम्वदेत् ।
जुषस्वेत्यभ्यनुज्ञातोगुरुणावाकुलीनकैः ॥
गृह्णीयाच्चस्वयंसिद्धोवद्धपद्मासनस्थितः ।
गृहित्वाप्रथमम्पात्रंद्वितीयम्वन्दयेत्सुधीः ॥
हैमंसोधुरसावहंदयितयादत्तावशेषार्पितं ।
किंचिच्चंचलरक्तपङ्कजदशासानन्दमुद्वीक्षितम् ॥
वामेस्वादुविशुद्धिसुद्धिकवलम्पाणौनिधायात्मके ।
वन्देपात्रमहंद्वितीयमधुनानन्दैकसम्वर्धनम् ॥
सिन्दूरतिलकंभालेपाणौचमदिरासवं कृत्वापिबेद्गुरुंध्यायंस्तथादेवींचचिन्मयीम्
ध्यात्वापिबेद्द्वितीयंतुतृतीयंम्वन्दयेत्पुनः
सर्वाम्नायकुलाकलापसहितंकौतूहलोद्योतम्

चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम्
ध्यातन्देवगणैः परम्मुनिगणैर्मोक्षार्थिभिस्सर्वदा
वन्दे पात्रमहंतृतीयमधुनास्वात्मावबोधक्षमम् ।
तृतीयन्देविसृष्टिकृत्यन्यासजालम्प्रविन्यसेत् ॥
ध्यात्वागुरुपदाम्भोजंचतुर्थंवन्दनञ्चरेत् ।
सद्यस्मोनरसावहंहरिहरब्रह्मादिभिः सेवित ॥
मुद्रामैथुनधर्म्मकर्म्मनिरतंक्षारामृलतिक्ताश्रयम् ।
आचार्यार्च्चितमग्रभैरवकुलोन्यासेनसंशोधित्त
प्रायात्पंचमकारतत्वसहितंपात्रंचतुर्थंन्मः ।
यथोशक्तिंजपित्वातुपंचमम्भन्दयेत्पुनः ॥
आधारेभुजगाधिरूढवलयेपात्रम्महीमण्डलं ।
द्रव्यंसप्तसमुद्रवारिपिशितंचोष्टैचदिग्दन्तिनः ॥
सोहम्भैरवमर्च्चयन्प्रतिदिनन्तारागणैरक्षतै
रादित्यप्रमुखैःसुरासुरगणैराज्ञाकरैकिङ्करै
पीत्वामद्यरमेत्कान्तांषष्ठंचपरिचिंतयेत
छत्रंचामरभद्रपीठपरमानन्दोदयन्दायकं
रामांराज्यमनोहरंशुभकरंसायुज्यसाम्राज्यदं
नानाव्याधिभवान्धकारहरणंजन्मान्तरध्वंसनं
श्रीमद्भैरवभैरवीप्रियतरम्पात्रंचषष्ठंनमः ।
शिवोहमितिसंचिंत्यसप्तमम्भन्दयेत्सुधीः ॥
जाग्रत्स्वप्नसुषुप्तिबोधपवनंचैतन्यसाक्षिप्रदं ।
विद्युद्भास्करवन्हिचंद्रधनुषांज्योतिःकलाव्यापितम् ॥
वामापिङ्गलमध्यमाक्षिवलयासत्कुण्डलीमध्यगं ।
पात्रंसप्तमःरूरणेनतरुणानन्दाधिकम्पातुमाम् ॥
गृहीत्वासप्तमंपात्रंशान्तिस्तोत्रम्पठेत्सुधीः ।

## शान्तिस्तोत्रम्

नश्यंतुप्रेतकुष्माण्डाःनश्यंतुदूषकाःनराः ।
साधकानांशिवास्सन्तुआम्नायपरिपालिनाम् ॥
जयन्तिमातरस्सर्वाजयन्तियोगिनीगणाः जयन्तिसिद्धडाकिन्योजयन्तिगुरुपंक्तयः

जयन्तिसाधकास्सर्वेविशुद्धासाधकाश्चये समयाचारसम्पन्नाःजयन्तिपूजकाःनराः
नन्दन्तुअणिमासिद्धाःनन्दन्तुकुलपालकाः। इन्द्राद्यादेवतासर्वेतृप्यन्तुवास्तुदेवताः।
चन्द्रसूर्यादयोदेवास्तृप्यन्तुममभक्तितः।
नक्षत्राणिग्रहायोगाःकरणाःराशयश्चये। सर्वेतेसुखिनोयान्तुसर्पादन्यन्तुपक्षिणः॥
पशवस्तुरगाश्चैवपर्वताःकन्दराःगुहाः। ऋषयोब्राह्मणोस्सर्वेशान्तिंकुर्वन्तुसर्वदा
स्तुताःमेविदितासन्तुसिद्धास्तिष्ठन्तुपूजकाः।
येयेपापधियस्सुदूषणरतामन्निन्दकापूजने
वेदाचारविमर्दनेष्टहृदयाःभ्रष्टाश्चयेसाधकाः।
दृष्ट्वाचक्रमपूर्वमन्दहृदयाःयेकौलिकाःदूषका॥
स्तेतेयान्तुविनाशमत्रसमयेश्रीभैरवस्याज्ञया।
द्वेष्टारस्साधकानांचसदैवाम्नायदूषकाः॥
डाकिनीनांमुखेयान्तुतृप्तास्तत्पिशितैस्तुताः।
येवाशक्तिपरायणाःशिवपरायेवैष्णवाःसाधवः
सर्वस्मादखिलेसुराधिपमजंसेव्यंसुरैस्सन्ततम्
शक्तिंविष्णुधियाशिवंचसुधियाश्रीकृष्णबुध्ध्यचये
सेवन्ते त्रिपुरंत्वभेदमतयोगच्छन्तुमोक्षन्तुते
शत्रवोनाशमायान्तुममनिन्दाकराश्चये
द्वेष्टारस्साधकानांचतेनश्यन्तुशिवाज्ञया॥
सतःपरंपठेत्स्त, त्रमानन्दस्तोत्रमुत्तमम्।

## दिव्यभावनिरूपणम्

अथप्रवक्ष्येदेवेशिदिव्यभावंसुखावहम् बहुजापात्तथाहोमात्कायक्लेशात्तुविस्तरैः।
नभावेनविनाचैवतंत्रमंत्राःफलप्रदाः। कोस्वोरसाधनैर्लक्षैःकिस्वाक्लिष्टकुलाकुलैः॥
किम्पीठपूजनैर्नैवकिम्विप्रभोजनादिभिः किंजितेन्द्रियभावेनकिंकूलाचारकर्मणा
यदिभावविशुद्धात्मानःस्यात्कुलपरायणः भावेनलभतेमुक्तिंभावेनकुलवर्द्धनं।
भावेनगोत्रवृद्धिःस्याद्भावेनकायशोधनम्तस्मात्सर्वप्रयत्नेनभावसारंसमाश्रयेत
विवेकसूत्रसंज्ञानांकिरासुदृढचेतसां। सर्वत्रसमभावानाम्भावमात्रंहिसाधनम्
सर्वंब्रह्मपदाम्भोजसम्भवंहिचराचरं। इत्थ्यायत्कुरुतेकर्मचातुलंफलसिद्धिदम्
अखण्डज्ञानचित्तानामितिभावंविवेकिनाम् निर्मलानन्दचित्तानामितिलक्षणमीरितम्
दिव्यभावेमहासिद्धिंप्राप्नोतिसाधकोत्तमः।

दिव्याभवं विना देवमत्पदांभोजदर्शनम्
यइच्छति महादेवसमूढः साधकाधमः । जन्ममात्रं पशूभावं वर्षषोडशकावधि
ततस्तु वीरभावश्च यावत्पञ्चाशतोभवेत् । द्वितीयांशे वीरभावस्तृतीयो दिव्यभावकः
परमात्रत्रयेणैव भावमैक्यम्भवेत्प्रिये । ऐक्यज्ञानात्कुलाचारं येनदेवमयोभवेत्
मथित्वाज्ञानदण्डेनवेदागममहार्णवम् । सारज्ञेनमयादेवि कुलधर्म्मः समुद्धृतः
एकतस्सकलाः धर्म्मा यज्ञतीर्थव्रतादयः एकतः कुलधर्म्मा थिश्चत्र कौलोऽधिकः प्रिये
न कौलसमधर्म्मोऽस्ति त्र्यंशये कुलनायिके योगीचेन्नैवभोगीस्याद्भोगीचेन्नैवयोगवित्
भोगयोगात्मकं कौलं तस्मात्सर्वाधिकः प्रिये सर्वेभ्यश्चोत्तमाः वेदा वेदेभ्योवैष्णवम्परम्
वैष्णवाद्उत्तमं शैवं शैवाद्दक्षिणमुत्तमम् दक्षिणादुत्तमम्वाममवामात् सिद्धान्तमुत्तमम्
सिद्धान्तादुत्तमङ्कौलङ्कौलात्परतरन्नहि ।
कौलाचारविधिम्वक्ष्येसावधानावधारय । यस्यविज्ञानमात्रेणकर्त्ताहर्त्तासदाशिवः
दिक्कालनियमोनास्तिस्थित्यादिनियमस्तथा नियमोनास्तिदेवेशि महामन्त्रस्यसाधने
क्वचिच्छिष्टःक्वचिद्भ्रष्टःक्वचिद्भूतपिशाचवत् नानारूपधराकौलाः विचरन्ते महीतले
कर्द्दमेचन्दनेभिन्नं पुत्रेशत्रौतथाप्रिये । मासनेभवनेदेवितथैवकाञ्चनेतृणे
नभेदोयस्यदेवेशि सकौलः परिकीर्तितः

इति खरे श्रीवास्तव्य कायस्थकुलावतंस श्रीराय लक्ष्मणप्रसादात्मजेन श्रीराय ईश्वरी प्रसादेन संगृहीते गुप्तसार संगृहे दशमः खण्डः समाप्तः ।

———

# एकादशखण्डेदेवताभेदाः।

## तत्रादौकालीभेदाः।

—*—

महा कालिका भद्रकाली रतिश्च । तथैवासुरीकालिका कालरात्रिः ॥
स्मशानादिकाली सुपूर्वामुखीति । तथातारिणी दक्षिणाकालिकापि ॥
सुप्रत्यङ्गिरा रक्त चामुण्डिका च । सुचामुण्डिका गुह्यकालीतथैव ॥
इमेप्रोदितास्तं त्रसंघे शिवेन । दशैवो धिकावेदभेदास्तुकाल्याः ॥

## ताराभेदाः।

चन्द्रघण्टा चण्डिका च । तथा नील सरस्वती ॥
क्रूरचण्डी महाचण्डी । महोग्राक्रूर मारिका ॥ *

चतुर्वेदोदरोग्रेया, द्विजटैकजटेत्यपि । त्रिजटानारसिंहीच वज्रतारोग्रतारिका । हंसताराभद्रकाली, वज्राकामेश्वरीतिच स्वयम्वरा शाकंभरी पारीजातसरस्वती । त्रैलोक्यविजयाचैवचिन्तामरायादितारिका प्रोक्तं यंशाम्भवीतारातथैवचीनसुन्दरी नीलादिसुन्दरीख्याता त्रैलोक्यविजयातथा ।

## महाविद्या ( श्रीविद्या ) भेदाः

त्रिपुरासुन्दरीचैव तथात्रिपुरसुन्दरी । स्वच्छावतीमधुमती तथात्रिपुरभारती । बालापञ्चाक्षुराख्याता, सारिकभगमालिनी भगेश्वीमहामाया नित्यक्लिन्नाचषोडशी अश्वारूढ़ाचभेरुण्डा, योगिनीवन्हिवासिनी त्रिजयाशिवदूतीच तथैवसर्वमंगला, त्रिपुराचमदनान्ता तथात्रिपुरमालिनी त्रिपुरापिललितान्ताभेदःप्रोक्ताश्चषोड़श

## भुवनेश्वरीभेदा

अन्नपूर्णाप्रमोदाच त्रिपुरात्वरितातथा । स्वयम्बराशूलिनीच नित्यक्लिन्नातथैवच । वज्रप्रस्तारिणीचैव दुर्गामहिषमर्दिनी । वाग्वादिनीविशालाक्षी वनदुर्गाचिरलोतथा । पद्मावतीसमाख्याता जयदुर्गाविन्ध्यावासिनी ।

---

* १ त्रिजटा ।

## छिन्नमस्ताभेदाः

रेरोचनोख्याता रेणुकाशवरीत्यपि प्रचण्डचण्डिकाचैव तयोभेदाःप्रकीर्त्तिता

## वगलामुखीभेदाः

घशिनोमोदिनीचैव त्रिमलाप्यरुणातथा जयिनीकौलीनीत्येव, वाराहीशिवदूतिका
सर्वेश्वरीचवार्त्ताली चित्रापित्वारितातथा
वज्रेश्वरीचवन्दीनी विजयासर्वमंग
दन्हिवासरताख्याताभेदाःप्रोक्ताश्चषोड्श

## भैरवीभेदः

भुवनेश्वरीभैरवीच, कौलानांभैरवीतथा । कामिनोभैरवीचैव तथाकमलभैरवी ।
भुवनेशीभैरवीच तथाडामरभैरवी । कामेश्वरीषट्कुटाषच त्रिपुरावालिकेत्यपि ।

## धूमावतीभेदाः

इयंघुघुंटिकाप्रोकातथाचज्वालमालिनी ।

## मातङ्गीभेदाः

चण्डमातङ्गिनीप्रोक्ता तथाकर्णपिशाचिनी तथासर्वाश्चयक्षिण्यःलघुश्यामाचशोत्तल

## लक्ष्मीभेदाः

कमलाचमहालक्ष्मीः धनदाश्रीःप्रकोर्त्तिता ।

## ज्वालामुखी भेदाः

जातवेदास्तनूनपात्

## शिवभेदाः

वटुकरुद्रश्चचूड़श्च दक्षिणामूर्त्तिरेवच । शरभोमंजुघोषश्च मरकटेशश्चिदम्बरः
मृत्युञ्जयस्तथाक्षोभ्यःपञ्चास्योहनुमांस्तथा महाकालोनीलकण्ठःकुक्कुटश्चरणायुधः
मर्कटेशःश्रुतिधरोमदनो हरिहरस्तथा । शङ्करनारायणश्चैव शिवभेदाइमेशुभाः

## विष्णु भेदाः

कुवेरोदधिवोंश्चैव नृसिंहःकृष्णएवच । लक्ष्मीनारायणश्चैव हयग्रीवास्सुदर्शनः
नारायणोथवाराहो गरुडःपुरुषोत्तमः । लक्ष्मीनृसिंहोरामश्च गोपालोपितथैवहि
कार्त्तवीर्य्यार्ज्जुनश्चैत विष्णोर्भेदाःप्रकीर्तिताः

## गणेशभेदाः

महागणपतिश्चैव हरिद्रागणपस्तिथा । वक्रतुण्डोयहेरम्बः त्रैलोक्यमोहनस्त
लक्ष्मीगणेश उच्छिष्ट गणेशःशक्तिनायकः

## क्षूर्य्यं भेदाः

द्वौभेदोहिसमाख्यातोसूर्य्यस्यपृथिवीतले घृणिश्चैववाथमार्त्तंडोनान्यभेदस्तुकश्चन

इतिखरे श्रीवास्तव्य कायस्थकुलावतंस श्रीराय लक्ष्मणप्रसा–
दात्मजेन श्रीराय ईश्वरीप्रसादेन संग्रहोते गुप्तसार
संगृहे एकादशः खण्डः समाप्तः ।

॥ इति श्री ॥

## ॥ समाप्तोयंग्रन्थः ॥





## गणेशभेदाः

महागणपतिश्चैव हरिद्रागणपतिस्तथा । वक्र... हेरम्बः त्रैलोक्यः
लक्ष्मीगणेश उच्छिष्ट गणे...

क्षूर्य्य ...लाल

...तोसूर्य्यंस्पर्थवीतले

राय रघुनाथ प्रसाद

राय लछमन प्रसाद का पहला विवाह साथ दुलारी बीबी परनातिन म
राजा रामनारायण सिंह बहादुर नाजिम वो सूबा सूबे बेहार वो बंगाल, दू
विवाह साथ रानी तेजकुअर उर्फ रानी यशोदा कुअर पुत्री मुन्सी राम प्रस
दीवान राजा रामबख्श डेंडिया खेरा ।

राय दुर्गाप्रसाद अनपत्य मरे

राय देवीप्रसाद

राय ईश्वरीप्रसाद संग्रह कर्त्ता

पुत्र १ पुत्री १

राय गौरीप्रस
तीन पुत्री छो
कर मरे

राय भवानीप्रसाद

तीन पुत्री

राय भगवती प्रसाद

राय ज्वाला प्रसाद

दो पुत्री

